# काश्यप शिल्प शास्त्रम्

श्री गणेशाय नमः

## काश्यपशिल्पशास्त्रं पूर्व भागः

### अथ प्रथमः पटलः

महादेवं शशिधरं सर्वलोकैकनायकम्
महेन्द्रमध्यगं शान्तं पार्वती सहितं परम् १
देवदानवसिद्धाद्यैः सेवितं सुरपूजितम्
प्रणम्य देवचरणं एवं ब्रूयात्स काश्यपः २
शुचेत्परमसद्भावं प्रसन्नात्सृष्टिकारणात्
जगतामभिवृद्ध्यर्थं योगिनामुपकारकम् ३
देवानां च हितार्थाय शिवज्ञानं परं महत्
महार्थमल्पग्रंथं च कर्षिणाद्यर्चनान्तकम् ४
अंशुमन्तमहातंत्रात्त्वयोक्तं हि पुरार्थकम्
तंत्रं तद्वददेवानां रुद्राणामधिकारिणाम् ५
अल्पायुष्यादिधर्माणां नराणां त्वधिकारिणां
अनुग्रहार्थं त्वेतेषां संक्षेपाद्वदमे प्रभो ६
साधुसाधुमहाविप्रयत्त्वया परिचोदितं
दुर्लभं तदहं वक्ष्ये शृणु चैकाग्रमानसः ७
पुष्यमासादिषण्मासा माघमासेतरे शुभाः
दक्षिणे चाश्वयुङ्मासः श्रावणः कार्तिकस्तथा ८
पूजिताः कर्षणादीनां शेषमासा विवर्जिताः
पौष्यादित्यमघास्वाती सावित्रत्वाष्ट्रमैत्रकं ९
श्रवणेन प्रजेशश्च तिष्याश्वि च कर्तृयुक्
सदने पूजितास्ताराः प्रतिपत्षष्ठिसप्तमी १०
तृतीया पञ्चमी चैव द्वितीया च त्रयोदशी
दशमी तिथयश्शस्ताः शुक्लपक्षे विशेषतः ११

प्रतिपत्पौर्णमासी च द्वितीया पञ्चमी तथा
तृतीया मध्यमाख्याता कृष्णपक्षे विशेषतः १२
षष्ठी च दशमी कृष्णे कनिष्ठाऽन्यानि गृह्यते
सितसौम्यौ शशीजीवः परं श्रेष्ठतमाः स्मृताः १३
तेषामंशोदयो होरा द्रेक्काणश्चैव दर्शिताः
शुभदा इति विज्ञेयाः तत्र राश्युदयं विना १४
मेषं कर्कटकं तौलिं मकरं च धनुर्विना
शेषराश्युदयाश्शस्ताः सर्वसंपत्समृद्धिदाः १५
उच्चस्थानगतश्चंद्रः सौख्यो वित्तगतस्तथा
शत्रुक्षेत्रगतश्चंद्रः नीचस्थोऽपि धनक्षयम् १६
भौमादित्याविन्दुराहू शौरिर्वा लग्नसंस्थिताः
आयुष्यं धनधान्यं च कर्तुर्नश्येत् न संशयः १७
धनस्थानगताः क्रूराः धनधान्यविनाशनाः
तत्रैव चंद्रसंयुक्ताः धनधान्यविवर्धनाः १८
भ्रातृस्थानगतास्सर्वे सर्वसंपत्समृद्धिदाः
बन्धुस्थानगताः पापाः सर्वदुःखभयावहाः १९
पुत्रस्थानगताः क्रूराः मृत्युपीडा भविष्यति
शत्रुस्थानगतास्सर्वे सर्वदुःखभयावहाः २०
भार्यास्थानगतो जीवः चंद्रभावयुतस्तथा
आयुष्यं धनधान्यं च सर्ववृद्धिं प्रयच्छति २१
निधनस्थानगास्सर्वे कर्तुर्निधनमादिशेत्
शुभग्रहा नवस्थाने सर्वसौख्यधनावहाः २२
कर्मस्थानगताः क्रूराः सवित्तायुः क्षयावहाः
शुभग्रहस्तु कर्मस्थः सर्ववित्तविवर्धनः २३
अशुभश्च शुभश्चैव लाभस्थानगताः शुभाः

द्वादशस्थो बुधो जीवः वित्तवृद्धिं समारभेत् २४
नक्षत्रान्ते च मासान्ते पक्षान्ते चैव दक्षिणे
व्यतीपाते च शूले च धृतौ वा कालकण्टके २५
गण्डके च तथा स्तूर्णे परिवेषे च दुर्दिने
उल्कापाते प्रवेशे च विष्टयां च विषनाडिके २६
षडशीति मुखे चैव मासशून्ये तथैव च
कर्षणादिप्रतिष्ठान्तं सर्वकर्म हिनाचरेत् २७
मर्त्या नामायुषं कर्तुं कृष्णपक्षे सुचंद्रवत्
तस्मात्तु यत्नतः शीघ्रं कर्तव्यो धर्मसंग्रहः २८
अल्पदोषं गुणाधिक्यं दिनं लग्नं च संग्रहेत्
अनेककोटिदोषाढ्यं दिनं वा लग्नमेव वा २९
दोषहीनतमं याति जीवदृष्ट्या द्विजोत्तम
अनेककोटिदोषस्तु जीवैकेन विना तथा ३०
तमोऽपरिमितं रात्रौ रविणैकेन नश्यति
तथैव जीवदृष्ट्या तु सर्वदोषविनाशनम् ३१
एवं परीक्ष्य बहुधा कर्षणादिसमाचरेत्
तत्रैव सदनं कुर्यात् तदंशे कर्षणं कुरु ३२
अष्ट दिक्षु च कर्तव्यं ग्रामादिषु शिवालयम्
पैशाचपदके कुर्यादालयं तु पराङ्मुखम् ३३
परिवास्तु त्रिदण्डादि यावता त्रिंशदन्तकम्
तावद्वेष्ट्यादिदेशेषु कर्तव्यं शिवमन्दिरम् ३४
परिखाभ्यन्तरे वापि पैशाच पदके कुरु
मानुषे तु पदे वाथ कर्तव्यं शिवमन्दिरम् ३५
विप्रक्षत्रियविट्शूद्राश्चानुलोमास्तथैव च
समासात्मजिकर्तारः सर्वप्राणि हिताय वै ३६

## अथ भूपरीक्षा विधिः

हस्तात्रं ततः खात्वा खात्वा तद्भूमिमध्यमे
पूरिते तु मृदा खाते ह्यधिका चोत्तमामही ३७
समा तु मध्यमाख्याता हीना साकन्यसामता
अग्रताच्छोत्तमामध्या मार्गहीनान्यसद्मनि ३८
श्वेता रक्ता च पीता च कृष्णा षप्रदथाक्रमात्
चतुर्विधमपि ख्याता तत्तज्ञात्याहता शुभा ३९
परेषामपरा शस्ता त्वपरेषु परां विना
तत्तदोभ्यामभिग्राह्या मर्त्यानामालयं कुरु ४०
सर्वामभिप्रशस्ते तु देवानां तु विशेषतः
भूतप्रेतपिशाचेभ्यः दनलं वा बलिं ददेत् ४१
अस्त्रेणोच्चाटनादेतत्पश्चात्करणमाचरेत्
श्वेता रक्ता च पीता च कृष्णा जान्युहुकौ क्रमात् ४२
युवानौ कर्षणापूर्वौ गंगा हीनौ बलान्वितौ
हेमशृंगकरोपेतकष्ठान्तरनसंस्पृशौ ४३
संपूज्य ऋृषि गायत्री गन्धपुष्पाक्षतैर्बुधः
पूर्वं निवेदनं कृत्वा प्राङ्मुखौ संस्थितौ वृषौ ४४
यज्ञाप्रीगैस्पारवृक्षे लक्षणेन युगं हलम्
सीतायामतिहस्ताढ्यां नाहं सप्तांगुलं भवेत् ४५
वृत्ततुन्दमशेषे तु वंशां श्रमश्रकम्
मेखलोच्च त्रितालं स्यात्त्रिमात्रं तद्घनं भवेत् ४६
मूलादग्रान् क्षमा क्षीणं किञ्चित्क्षीणं न मध्यमम्
मेखला वस्तुमूले तु तुर्यग्वेशनवांगुलम् ४७
देवाप्यंशांगुलायामं घनमन्त्यार्धमात्रकम्
चतुर्विंशांगुलायामं घ्राणदीर्घं तु काश्यपः ४८

सीतार्धे घ्राणतुंगं तु पञ्चांगुलमुदाहृतम्
घ्राणांगुष्ठमुखं कुर्यात् मनुमात्रं तदायतम् ४९
शेषं चंद्रमिति ख्यातं सीसमेखलसन्धितौ
षरामात्रं घ्राणविस्तारं घनं देवा गुलं भवेत् ५०
अग्रं सूचीमिवाकारं मनुपूर्वं कृशं भवेत्
त्रिपञ्चमात्रमित्युक्तं सीसघ्राणाग्रयोस्तरम् ५१
अथवा हलजिह्वां तु घ्राणाग्रे योजयेत् बुधः
सीतायामसमानं च युगं चन्द्रयुगान्वितम् ५२
कनिष्ठांगुलिपरीणाहं गोचर्म द्विकरान्वितम्
हृदयं मन्त्रमुच्चार्यबुधः युगश्रियौ वृषौ ५३
युगमध्ये हलं बद्ध्वा किञ्चित् दक्षिणमाश्रितः
शिवमन्त्रं समुच्चार्य प्राङ्मुखो वाप्युदङ्मुखः ५४
कर्षयेत् मतिमान्विप्रः तृणादीनि व्यपोह्य च
तिलसर्षपमुद्गांश्च नेत्रमात्रेण वापयेत् ५५
आचार्यं पूजयेत्तस्मै द्विद्विगाहहलौषधौ
त्रिरात्रमंकुरं श्रेष्ठं वेदरात्रं तु मध्यमम् ५६
अधमं भूतरात्रं तु अधमं परिवर्जयेत्
अपूफलफलागाढ्या गोधनानि निवेदयेत् ५७
एकरात्रं द्विरात्रं वा वस्त्रं तत्रैव पूजयेत्
गोतन्त्रमेवमाख्यातं गोमयप्रश्नवैरपि ५८
प्रस्तरं भूतलं पश्चात् मध्यमे श्मतलं कुरु
गोमया लेपतं कृत्वा दिक्परिच्छेदनं कुरु ५९

अथ दिक्परिच्छेदनम्

शंकुः कलांगुलायामं नाहं तत्समुच्यते
मूलताराष्टभागैकहीनमग्रतिशालकम् ६०

सुवृत्तमर्जयेत् शंकुं सारवृक्षं विशेषतः
शंकुद्विगुणमानेन तन्मध्ये मण्डलं लिखेत् ६१
तन्मध्ये स्थापयेत् शंकुं चतुर्दिक्षु विशेषतः
पूर्वापराह्णयोः छाया यदि तौ मण्डलान्तकौ ६२
छायाग्रमध्यं संलक्ष्यं तथैव त्वपराह्णके
बिन्दु द्वयान्तरं सूत्रं पूर्वापर दिगिष्यते ६३
तयोर्बिन्द्वन्तरं ग्राह्यं शफराननपुच्छकम्
दक्षिणोत्तरगं सूत्रं तध्येतु प्रसारयेत् ६४
ये मध्यमध्यमार्धा तु अपच्छायांगुलं व्रजेत्
मण्डलं कुब्जतालेन अंगुलं तु विभाजयेत् ६५
भानुर्मीनाष्टविंशांशं सप्तविंशांशमुत्तरे
गते त्वर्जवनत्युक्ता कन्यायां च तथैव हि ६६
मीनेष्टविंशदंशे हि भागं प्रत्यर्धमात्रकम्
वर्धयेन्मिथुने सप्तविंशदंशावसानके ६७
ततो त्रिमात्रं क्षीणं स्यात् भागं प्रतिविशेषतः
कन्यायां छान्दविंशांशं तद्धारांशं विवर्धनात् ६८
छायाष्टविंशदंशान्तं ततो ह्रासं तथैव च
छाया वृद्धिं क्षयं चैव कृत्तिकांशं कुमध्यमम् ६९
छायामानं व्रजेन्मध्ये ब्रह्मसूत्रं प्रसारयेत्
पूर्वापराह्णयोः छायामध्ये मानं च वर्जयेत् ७०
प्रागादिपरिदं सूत्रमिष्टमाने तु विन्यसेत्
पुण्याहं वाचयेत् पश्चात् खात्वा प्रासादमानतम् ७१
स्यात् प्रासादं सविस्तारमेकाशीति पदं कुरु
तत्पदे वास्तु देवांश्च पूजयित्वा समासतः ७२
मध्वाज्यगुडसंमिश्रं देवानां तु बलिं ददेत्

प्रणवादींस्तु मध्ये तु स्वाहान्तं बलिमाचरेत् ७३
वास्तुहोमं तथा कृत्वा मध्ये वा चोत्तरेऽपि वा
वास्तुहोमं विना कृत्वा तद्वास्तु विनशिष्यति ७४
पर्यग्निकरणं कृत्वा प्रोक्षयेत् पञ्चगव्यकैः
कर्षणं ह्येवमाख्यातं शृणु चाष्टकवास्तुकम् ७५

इति काश्यपशिल्पे प्रथमः कर्षणपटलः

अथ द्वितीयः पटलः

प्रासादवास्तुलक्षणम्

अथ वक्ष्ये विशेषेण प्रासादं वास्तुलक्षणम्
प्रासादस्य विशालं तु नवभागविभाजितम् १
प्रागग्राद्दशसूत्रं स्यात् उदगग्रं तथैव हि
एतन्नव नवांशे तु ब्रह्मा मध्ये नवांशयुक् २
समरी पूर्वभागे तु विवस्वान् दक्षिणे तथा
मित्रः पश्चिमभागे तु ह्युत्तरे पृथिवी धरः ३
ब्रह्माणं तु निरीक्षन्तः स्थिताः षट् पदभागिनः
आपश्चैवापवत्सश्च ऐशान्यां दिशिसंस्थितौ ४
सवित्रश्चैव सावित्रः आग्नेय्यां दिश्यवस्थितौ
इंद्र इंद्रादयश्चैव नैर्ऋत्यां दिश्यवस्थितौ ५
रुद्रो रुद्रजयश्चैव वायव्यां दिशि संस्थितौ
एते द्विपदभोक्तारः अंशमर्धद्वयं तथा ६
ऐशान्यां चैव पर्जन्यो जयन्तश्च महेंद्रकः
आदित्यः सत्यकश्चैव भ्रमश्चैवान्तरिक्षकः ७
अग्निः पूषा च विधतो राक्षसश्च यमस्तथा
गन्धर्वो भृंगराजश्च मृषश्चैव तु दक्षिणे ८

निर्ऋतिर्दौवारिकश्चैव सुग्रीवः पुष्पदन्तकः
वरुणोऽशेषरोगाश्च पापक्षय विपश्चमे ९
वायुर्नागस्तथा मुख्यो भल्लाटः सोम एव च
ऋगादीत्यदितिश्चैव बाह्यस्थैकांशभोगिनः १०
चरकी च विदारी च पूतना पापराक्षसी
ईशानादिषु कोणेषु बाह्यस्थाः पदवर्जिताः ११
एकाश्चैको न पञ्चाशत् देवताः परिकीर्तिताः
विंशत्सूत्रेण ते सर्वे बद्धवा वै वास्तुमूर्तिनम् १२
अधोमुखं शाययित्वा नासामपि सितस्थिता
वास्तुमूर्तिं तथा देवाः बध्वा तं शाययेत्कथम् १३
देवासु रमहायुद्धं वर्जयन्तु यथा तथा
असुराणां हि तत्कार्यं उग्रः कुर्यान्महातपाः १४
अब्रवीच्च तु संभूता देवैर्युद्धं प्रवर्तयेत् १५
सर्वदेवा युधैर्देवैः वर्धनं तु न शक्यते
सर्वदेवाश्च तद्भूतं शाययेयुरधोमुखम् १६
विंशत्सूत्रैश्च तद्भूतं बध्वा संस्तभ्य संस्थिताः
स एव वास्तुपुरुषः वास्तुमूर्तिस्तदुच्यते १७
तदन्यधोमुखो हीनः सर्वेषां दुःखमावहेत्
यत्तु वास्तु निविन्यस्तं तत्सर्वं वास्तुमूर्तिवत् १८
तदुद्धृत्य निवृत्यर्थं सर्वदुःखनिवारणम्
सर्वसिद्धिकरं तं तु वास्तुहोमं बलिं कुरु १९
ब्रह्मादिदेवतानां तु तृप्तिहोमं बलिं द्विज
तासां तृप्तिकृतं वास्तुपुरुषो वाथ नश्यति २०
तस्मात्सर्वप्रयत्नेन दद्यात् ब्रह्मादीनां बलिम्
वास्तुहोमस्तु कर्तव्यः ब्रह्मादीनां स्वनामतः २१

ऐशान्यां तु शिरो न स्याद्वरदो निरुचिगोचरे
आग्नेयं वायुदिग्भागे कूर्परौ जानुशायिनौ २२
मूर्तिदेवस्थिता देवाः ईशानः शिरसिस्थितः
नेत्रस्थाने तु पर्जन्यः जयन्तादिती कर्णकौ २३
आपः कृकाटिकोर्ध्वे तु आपवत्सस्तथैव च
नाभिसूत्रोपरि ब्रह्मा बीजाविंद्रजयन्तिनी २४
लिंगे इंद्रजयश्चैव पादयोर्निवृतिस्थितिः
समरी पृथिवी चैव स्तनसूत्रो परिस्थितौ २५
विवस्वानपि मित्रश्च कुक्षिपार्श्वोपरिस्थितौ
ऊरुहस्ते तलं चैव सावित्रे तु प्रकल्पयेत् २६
एतत्प्रकोष्ठमध्ये तु सावित्रं तु निधापयेत्
रुद्रो रुद्रजयश्चैव वामपार्श्वे तु पूर्ववत् २७
महेंद्राद्यन्तरिक्षान्ताः सव्यश्चाभुविसंस्थिताः
तज्ञानुकूर्परे विप्राः अग्निमूर्ति निधापयेत् २८
पूर्वादिंद्रपपर्यन्तं जंघाया दक्षिणे न्यसेत्
दौवारिपापरक्षान्तं जंघाया दक्षिणे न्यसेत् २९
वामकूर्परजानूर्ध्वे वायुमूर्ति निधापयेत्
नागादिगजपर्यन्तं वामभागे तु संस्थिताः ३०
चरद्विद्याश्चतुष्कर्णे कर्णसूत्राग्रकौ स्थितौ
शेते ह्यधोमुखो वास्तु मूर्तिरेवं द्विजोत्तमाः ३१
प्रागिवैव बलिं दत्वा वास्तु संकल्पयेत् द्विजाः
प्रासादवास्तुरेवं हि वास्तुहोमं ततः परम् ३२

इति काश्यपशिल्पे द्वितीयः प्रासादवास्तुपटलः

अथ तृतीयः पटलः

हर्म्ये वाद्यष्टकाकाले लिंगसंस्थापयेत्तथा
सकलस्थापने चैव संप्रोक्ते तु तथैव च १
बाणलिंगप्रतिष्ठायां मण्डपे नृत्तरङ्गके
सभायां यागशालायां वास्तुहोमं समाचरेत् २
आचार्यलक्षणोपेतः स्वाचार्यो होममाचरेत्
समरी प्राक् प्रदेशे वा सौम्ये वा ब्रह्मणः पदे ३
स्थण्डिलं सिकतैः कुर्यात् हस्तमात्रप्रविस्तरम्
उत्सेधं द्व्यंगुलं ज्ञेयं चतुरश्रं समं कुरु ४
जेलरक्तं न्यसेदैंद्रे शालिमध्ये द्विजोत्तमाः
गन्धतो येन संपूज्य होमतंत्रे च निक्षिपेत् ५
पालाशपत्रपर्वा च तज्जले तु निधापयेत्
गन्धपुष्पादिनापूज्य तज्जले द्वारदेवताः ६
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
ब्रह्मादिवास्तुदेवांश्च अग्निमध्ये तु समावहेत् ७
गन्धैः पुष्पैश्च धूपैश्च पूजयेत् स्वस्वनामतः
प्रणवादीनां तु स्वाहान्तं होममाचरेत् ८
स्याद् ब्रह्मप्रसमी हेतुः प्रत्येकं होममाचरेत्
शतमर्धं तदर्धं वा होमयेत् गोघृतेन च ९
पायसेनैव चरुणा प्रत्येकं तु शताहुतीः
जयादिरभ्यातानं च राष्ट्रेभ्यश्च क्रमात् हुनेत् १०
मिन्दाहुतिं च कूश्माण्डं प्रायश्चित्ताहुतिं चरेत्
हव्यवाहेति मंत्रेण स्विष्टमग्नेति होमयेत् ११
यदस्येति च मंत्रेण होमयेत्तु घृतेन तु
परिषेचनं ततः कृत्वा प्रासादेन तु मंत्रतः १२

परिस्तरणं विधाय आज्येत्तोत्तपथे क्रमात्
ब्रह्माणं तु परे दद्यात् दर्शनौ सूर्यमण्डले १३
प्रणीताद्भिश्च संप्रोक्ष्य चात्मानं पावमानकैः
एवं समाप्य होमं तु प्रणिपत्यक्षमापयेत् १४
दर्भैः पालाशपत्रैश्च शोषितैर्बन्धयेत्क्रमात्
तदग्नौ दीपयित्वा तु तथा प्रासादमण्डपे १५
प्राकारे गोपुरस्थाने पर्यग्निकरणं कुरु
ब्राह्मे तदग्निमुद्वास्य स्थापिते तु जले बुधः १६
सर्वत्र प्रोक्षयेद्विद्वान् शुची वो हव्यमंत्रतः
वासुदेवोद्गतार्थं तु पर्यग्निकरणं कुरु १७
वास्तुहोमः समाख्यातः प्रथमेष्टकाया विधिं शृणु
इति काश्यपशिल्पे वास्तुहोमविधिर्नाम तृतीयः पटलः

## अथ चतुर्थः पटलः

## प्रथमेष्टकाविधानम्

अथ वक्ष्ये विशेषेण शृणु त्वं प्रथमेष्टकाम्
प्रासादे मण्डपे साले गोपुरे च तथैव च १
सदने परिवाराणां विन्यसेत् प्रथमेष्टकाम्
स्निग्धं चैव तथाऽस्निग्धं द्विविधं भूमिलक्षणम् २
चिक्कणं शर्कराढ्यं च अशक्यखननक्रियम्
सुस्निग्धमिति विख्यातं तनुवालुकसंयुतम् ३
पुरुषाञ्जलिमात्रं तु दृष्ट्वा तोयसमन्वितम्
अशेषं खननं यत्तत् स्निग्धाख्यातमहीतलम् ४
प्रासादस्य तु विस्तारः द्विद्विहस्थोथ विस्तृतः
हस्तमात्रं खनेत् द्विप्रसुस्निग्धं तु महीतलम् ५

यावत्तत्र जलं दृष्टं खनेत्तावत्तु भूतले
अवटं वालुकैः स्थूलैः पूरयित्वा जलान्वितम्  ६
पूरयित्वा जलं पश्चात् जलेन समतां कुरु
श्वसले हस्तिपादैश्च स्निग्धं कृत्वा बृहच्छरैः  ७
एवमाधारमानं तु अधिकं त्ववटं कुरु
मानसूत्रादिसूत्रं तु पातयेत्तत्र देशिकः  ८
प्रथमं मानसूत्रं तु विन्यसेत्तु द्वितीयकम्
तृतीयमधिष्ठानसीमान्तं तथोपपीठसीमकम्  ९
पञ्चमं होमसूत्रं तु षष्ठं तु प्रतिसूत्रकम्
एवं क्रमेण कर्तव्यं सूत्रषट्कं द्विजोत्तमाः  १०
तस्योत्तरे प्रपां कृत्वा नवहस्तप्रमाणतः
षोडशस्तंभसंयुक्तं विधाय द्विजभूषितम्  ११
तोरणैर्दर्भमाल्यैश्च मुक्तादामैरलंकृतम्
मण्डपस्य त्रिभागैकं वेदिकायास्तु विस्तरम्  १२
हस्तमात्रसमुत्सेधं दर्पणोदरसंनिभम्
परितस्त्वग्निकुण्डानि महाशालं प्रकल्पयेत्  १३
वेदाश्रं च सुवृत्तं च अब्जमिंद्रादितः क्रमात्
हस्तमात्रं च विस्तारं खातं चैवातिमेखलम्  १४
गोमयालेपनं कृत्वा प्रोक्षयेत् पञ्चगव्यकैः
पिष्टचूर्णैरलंकृत्य ततो वै विप्रभोजनम्  १५
कृत्वोच्छिष्टं समुत्सृज्य वास्तुहोमं ततः कुरु
पर्यग्निकरणं कृत्वा प्रोक्षयेद्वा कुशान् न्यसेत्  १६
स्थण्डिलं वेदिकायां तु अष्टद्रोणैश्च शालिभिः
तदर्धैः तण्डुलैश्चैव तदर्धैश्च तिलैरपि  १७
स्थण्डिलं कल्पयेद्धीमान् दर्भैः पुष्पैः परिस्तरैः

शिलाभित्तौ शिलाभिस्तु कारयेत् प्रथमेष्टकैः १८
आद्येष्टकान्तं कर्तव्यं विपरीतं विनाऽचरेत्
पुंलिङ्गाभिः शिलाभिस्तु कारयेत् प्रथमेष्टकाः १९
द्वारबन्धस्तु कर्तव्यः श्रीकलाभिर्विशेषतः
नपुंसको पलैर्नैव मूर्ध्नेषीक द्विजोत्तम २०
यथालाभशिलाभिर्वा भित्तिस्तंभोदयो भवेत्
नवाङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् २१
एकोन चत्वारिंशान्तं वेदवेदाङ्गुलेन तु
विस्तारं च घनं प्राग्वत् तत्संख्या चैव षोडश २२
एकादिषोडशान्तानां भूमीनां क्रम उच्यते
मूर्धेष्टकादिपुंसादिरेखाभिस्तु परीक्षयेत् २३
अयुग्म ऋजुरेखा च पुल्लिङ्गा संप्रकीर्तिता
युग्मरेखा च युग्मत्वात्कण्ठाभासा नपुंसका २४
भिन्नबिन्दुकलादीनि लोकपालसमन्वितम्
वर्जतानि प्रयत्नेन दोषहीनांस्तु संग्रहेत् २५
ईषदुन्नतमग्रं स्यात् नतमग्रमुदाहृतम्
ऊर्ध्वभागं मुखं ख्यातमपरं भूतदंशकम् २६
अग्रानामग्रतां चाग्रा ऊर्ध्वं ह्यापरमुच्यते
प्रागुदस्तं तु वैश्यानां शीर्षाणां परिकीर्तितम् २७
मूलाग्रादितरत् ग्राह्यं प्रमाणमिष्टयापरं
गव्यैः गन्धोदकैः स्नाप्य पूर्वरात्रेऽधिवासयेत् २८
शिवद्विजकुलोद्भूतः शिवदीक्षा समन्वितः
सर्वलक्षणसंपन्नः वेदाध्याय रतः शुचिः २९
अपोवगाहनं स्नानं भस्मस्नाानं समाचरेत्
नवांबरधरोष्णीषी सासोक्तिधानुलेपनः ३०

गन्धमाल्यैरलंकृत्य सकलीकृतविग्रहः
पञ्चाङ्गभूषणैर्भूष्य ज्ञाळयेत् वर्मणेष्टकाः ३१
हैमैः कार्पाससूत्रैर्वा प्रतिसंबन्धमाचरेत्
स्थण्डिले कर्णिकाबाह्ये महासामुनिधापयेत् ३२
लकारं पूर्वभागे तु लकारं याम्यगोचरे
लकारं वारुणश्चेतु यकारं सौम्यगोचरे ३३
शालिपिष्टेन संलिख्य प्रत्येकं वस्त्रवेष्टितम्
पूर्वाग्रं सौम्ययाम्ये तु शेषौ द्वौ चोत्तराग्रकौ ३४
स्थापयेत्सममभ्यर्च्य पृथिव्याद्यानकाः क्रमात्
नवसंख्यान् नवान् कुंभान् सूत्रवस्त्रसुभूषितान् ३५
सकूर्चान् सविधानांश्च स्नानगन्धसुपूजितान्
हेमपंकजसंयुक्तान् मध्यमात् क्रमशो न्यसेत् ३६
मध्यकुंभे तु सादाख्यं परितो लोकपालकान्
तत्तन्मंत्रैः न्यसेत्कुंभे ध्यात्वा गन्धादिपूजयेत् ३७
निवेद्यान्नं पयो धीमान् ततो होमं समाचरेत्
अग्निध्यानादिकं सर्वमग्निकार्योक्तमाचरेत् ३८
पालाशो दुंबरैश्चैव अश्वत्थवटमुख्यकैः
समिधः सद्यमंत्रेण मूलेनान्यत्तु होमयेत् ३९
चरुहोममघोरेण नेत्रेणैव तिलांस्तथा
सर्षपं कवचेनैव प्रत्यकाष्टशताहुतीः ४०
द्रव्यं प्रतिविशेषेण व्याहृत्याऽऽहुतिमाचरेत्
एवं जागरणं रात्रौ प्रभाते देशिकात्तमः ४१
अपोवगाहनादीनि प्राणिनैव समाचरेत्
इष्टकाकलशाग्निं च पूरयेत्तु विशेषतः ४२
जलादिरम्यदानैश्च राष्ट्रं चैव तु होमयेत्

शिष्टमग्नेतिमंत्रेण पूर्णाहुतिं समाचरेत् ४३
स्थापकः स्थापतिः पूज्यो वस्त्रहोमाङ्गुलीयकैः
मुहूर्ते समनुप्राप्ते द्वारं निश्चित्य वै तदा ४४
द्वारस्य दक्षिणे वांघ्रिमूले भक्त्यन्तरांघ्रिके
इष्टकां वा शिलायां वा स्थापयेत्स्थपतिः क्रमात् ४५
प्रासादमण्डपानां तु निर्गमस्य प्रदक्षिणं
सालानां गोपुराणां च प्रवेशस्य तु दक्षिणे ४६
अभ्यन्तरे तु भित्तेस्तु गोपुराणां निधापयेत्
अग्रमग्रं तथैशान्यां मूले मूले तथाङ्गुले ४७
अग्नौ मूले समायुक्त्या अग्नौ च वायुगोचरे
पञ्च ब्रह्मसमुच्चार्य पूर्वादिक्रमशो न्यसेत् ४८
तन्मध्ये विन्यसेत् प्रीतां हेमपंकजसंयुतं
पञ्चमृद्भिः समालिख्य कुंभस्थाद्भिस्तु पूरयेत् ४९
शोभनं दक्षिणावर्तं वामावर्तमशोभनम्
वामावर्तं भवेत् सम्यक् शान्तिहोमं तु कारयेत्
या गोपकरणं सर्जा मध्यात् शिल्पी प्रकारयेत्
इति काश्यपशिल्पे प्रथमेष्टकाविधिर्नाम चतुर्थः पटलः

## अथ पञ्चमः पटलः
## उपपीठविधानम्

अथ वक्ष्ये विशेषेण उपपीठविधिं परम्
स्वाधिष्ठानसमोच्चं वा त्रिपादं सार्धमेव वा १
पञ्चभागेऽग्निभागं वा सपादं सार्धमेव वा
पादोनादिगुणं वाथ द्विगुणं वा विशेषतः २
एवमष्टविधः ख्यातः उपपीठोदयो द्विज

दशधा भज्याधिष्ठानमधिष्ठानस्य पादुकम् ३
पञ्चांशं वाथ निष्क्रान्तमधिष्ठानस्य पादुकम्
उपपीठस्य नीप्रं तु पञ्चस्थं परिकीर्तितम् ४
तन्नीप्रमुपपीठं तु पाद्बाह्ये परिकल्पयेत्
अथवाग्नी पादसदृशं द्विगुणं त्रिगुणं तु वा ५
जगती नीप्रतुल्यं वा उपानसदृशं तु वा
एवं हि पञ्चभेदं स्यात् उपपीठस्य निर्गमः ६
उपपीठस्य निष्क्रान्तं सभादीनामथोच्यते
सभादीनां तु पाद्बाह्यं निष्क्रान्तं दण्डमुच्यते ७
समं तु दण्डमारभ्य नवदण्डावसानकम्
उपानं च तथा नीप्रं प्रथमादि त्रयं त्रयम् ८
तदुच्चे द्वादशांशे तु उपानोच्चं द्विभागकं
पद्ममंशेन कर्तव्यं मध्यांशं कंपमुच्यते ९
भूतांशं कण्ठतुङ्गं तु कंपमब्जं तु पूर्ववत्
एकेन वाजनं कुर्यात् कंपमेकेन कारयेत् १०
अष्टांगमेवमाख्यातं षडङ्गं तद्विनांबुजम्
कंपेनांबुजमानं तु योज्यं भद्रोपपीठकम् ११
ऊर्ध्वे कंपं विना वापि पञ्चाङ्गमुपपीठकम्
उपपीठस्य चोत्सेधे सप्तविंशति भाजिते १२
द्विभागं पादुकोत्सेधं पंकजं तत्समं भवेत्
कंपमेकांशदित्युक्तं द्वादशांशं गलोदयम् १३
उत्तरं चैकभागं स्यात् तत्समं चोर्ध्वमंबुजम्
अग्निभागं कपोतोच्चं अंशमालिंगमुच्यते १४
त्रैय्यश्रमेकभागेन प्रतिमानं द्विभागया
पानं चैकविभागेन नानं तत्प्रतिभद्रकम् १५

द्विभागं पादुकोत्सेधं द्विभागं पंकजोदयम्
कंपमेकेन कर्तव्यमेकेनान्तरितं भवेत्  १६
द्विभागं प्रतितुङ्गं तु एकेनैव तु वाजनम्
अष्टांशं गळमानं तु कंपमेकेन कारयेत्  १७
अब्जमेकेन कर्तव्यं कपोतोच्चं गुणांशकम्
एकेन लिङ्गमेकेनान्तरितं तु प्रकल्पयेत्  १८
प्रतितुङ्गं द्विभागेन वाजनं चैकभागया
सप्तविंशतिभागे तु नामतः प्रतिसुन्दरम्  १९
उपपीठस्य चोत्सेधे एकविंशति भाजिते
उपानं तु द्विभागेन तत्समं त्वंबुजोदयम्  २०
कण्ठमंशेन कर्तव्यं पद्ममंशेन कारयेत्
महापदि द्विभागेन पद्ममंशेन कारयेत्  २१
कंपमंशेन कर्तव्यं कण्ठोच्चं वसुधारया
भागेन कंपमन्येन पद्मं कंपोथ कर्तृभिः  २२
कंपमंशेन कर्तव्यमेतत् सौभद्रमुच्यते
उपानाद्विगमन्यांशः अंबुजांशेन कन्धरम्  २३
द्विभागेनाब्जं कर्तव्यं पट्टिका तत्समं भवेत्
वृत्तं तु समभागेन कंपमेकेन कारयेत्  २४
सप्तभागं गलोत्सेधं कंपमंशेन कारयेत्
अंबुजं समभागेन महापट्टी द्विभागया  २५
अब्जमथांशभागेन कंपमंशेन कारयेत्
पञ्चपञ्चोपपीठैश्च समभागविभाजिते  २६
कल्याणिका निगदिता सर्वधाम्नस्तु पूजिता
एवं विधिः समाख्यातः उपपीठे द्विजोत्तम  २७
अङ्गनिष्क्रान्तवेशं च अधिष्ठानविधानवत्

भूतैश्च व्यालसिंहैश्च मकरैः पत्रजातिभिः २८
उपपीठगलोमिश्रं भूषयन्तु सलक्षणम्
प्रत्यङ्गं मकरस्थान्तं अब्जाढ्यं रुद्धमस्तकम् २९
अंबुजेनैव कर्तव्यमधिष्ठानोक्तमाचरेत्
उपपीठं समाख्यातमधिष्ठानविधिं शृणु ३०

इति काश्यपशिल्पे उपपीठविधानं नाम पञ्चमः पटलः

## अथ षष्ठः पटलः

## अधिष्ठानलक्षणविधिः

अथ वक्ष्ये विशेषेण अधिष्ठानविधिं शृणु
धरा तलमधिष्ठानमाधारं धरणी तलम् १
भुवनं पृथिवी भूमिः पर्याय वचनादिभिः
हर्म्यतारं तु कुड्यादि नीप्राधिष्ठाननीप्रकम् २
तस्मादुपरिपीठस्य नीप्रं होमाग्निनिर्गमम्
तस्मात् प्रकृतिनीप्रं च सूत्रपातं तु कारयेत् ३
यत्रैवाद्येष्टकानां समानं तत्रैव लक्षयेत्
तस्मात्तु घनभित्त्यैव प्रकृत्यन्तं प्रकल्पयेत् ४
सुभावं प्रकृतेरुध्ये प्रकृतावेकहस्तकम्
द्विहस्तं वा प्रकृत्युच्चं त्रिहस्तं वा विनाऽऽकृतिम् ५
षडंगुलं समुत्सेधं षट् षडंगुलवर्धनात्
उत्तमं मध्यमं चैव अधमं स्यात् त्रिधा अपि ६
प्रकृत्यं च स्थलं ख्यातमन्तर्मण्डलकस्य तु
एवं कृत्वा प्रकृत्यूर्ध्वं होमवाक्पलदेशिकः ७
भित्तिपादस्य विष्कंभं द्विगुणं त्रिगुणं तु वा
होमनीप्रमिति ख्यानं तदर्धं वा बलाञ्चितम् ८

तद्धोमप्रकृती नीप्रैर्द्वित्रिदराडैरथापि वा
स्रायानि प्रत्यवाहन्ति प्रादुवा पिङ्गलं तु वा ९
होमनीप्रं समं प्रोक्तं द्विवर्धं द्विजसत्तम
होमं तु गन्धमानेन होमोर्ध्वेऽब्जं प्रकल्पयेत् १०
स्रब्जस्योच्च समं वेशमब्जार्धो वपानवम्
तस्योपरि स्रधिष्ठानं सोपपीठान्वितं तु वा ११
स्रन्यद्धोमं प्रकृत्यूर्ध्वे सोपानानां प्रकल्पयेत्
तदूर्ध्वे तरतालं वा सोपपीठमथापि वा १२
दलापानं विनाधारं होमोर्ध्वे वा प्रकल्पयेत्
प्रकृतिं समसूत्रं तु कल्पयेत् देशिकोत्तमः १३
होपमाप्रे उपानादि हर्म्यनिष्क्रान्तवेशनम्
स्रार्तो त्सेधांशमानेनाधिष्ठानस्योच्चयं विदुः १४
पादोदयोर्ध्वमानं वा षडष्टांशोनमेव वा
स्रग्रपादविशालं तु दराडमित्यभिधीयते १५
एकदराडं समारभ्य स्रर्धदराडविवर्धनात्
यापादापञ्चसंख्या तु स्रग्निदराडावसानकं १६
तद्बाह्ये वादनिष्क्रान्तं तत्त्रिभागविभाजिते
उपानं व्यासमेकांशं शेषं जगतिविस्तरम् १७
स्रामुदा वंशमेकांशं तन्नीप्रं जगती समम्
कुमुदे पट्टमंशेन तत्समं कर्णवेशनम् १८
सर्वेषामंबुजानां तु नीप्रं तुंगसमं भवेत्
कंपानामपि चाशेषं चतुर्भागैकनिर्गमम् १९
महावाजननिष्क्रान्तं तुंगं तुल्याद्वि एव वा
त्रिपादं वाथ निष्क्रान्तं यथा बलवशान्नयसेत् २०
जन्मादिपञ्चवर्गेषु तत्तदंगावसानके

द्वारार्थं वा स्थलार्थं वा चोदयेत्तद्धरातले २१
उपानं जगती कंपं कंठं च पट्टिका तथा
पञ्च वर्गमिति ख्यातं जगत्यर्थं तदा बुधः २२
द्वारं च जलधारं च स्थलं चाप्रतिबन्धकैः
प्रेतरूर्ध्वे तु कर्तव्यमङ्गं चैतन्न कारयेत् २३
प्रत्यञ्चेत्तु धनं चेतुविपदामास्पदं सदा
तस्मात् सर्वप्रयत्नेन प्रत्यङ्गच्छेदनं विना २४
अधिष्ठानं द्विधा ज्ञेयं प्रतिबन्धांघ्रिबन्धनम्
पत्येकानां तु भेदेन प्रोच्यते द्विजसत्तमाः २५
सर्वेषां प्रतिबन्धानां कुमुदं वृत्तमुच्यते
पादबन्धतलानां तु वस्वश्रृङ्गमुदं भवेत् २६
तयोस्संकरमेतस्मिन् भवेत्तत् कर्तृनाशनम्
प्रासादं प्रतिबन्धं चेत् तद्भेदानेकसंकरम् २७
कूटकोष्ठादिकानां तु कर्तव्यं तत् शुभावहम्
तदेवांघ्रिप्रबन्धेन तस्मिन् शंकरमुत्तमम् २८
अशुभं विपरीतं च वास्तुराष्टनृपस्य च
तस्मात्सर्वप्रत्नेन वर्गवर्गेण शंकरम् २९
अधिष्ठानस्य चोत्सेधे एकोनविंशदंशिने
उपानं चैकभागेन सप्तांशे जगती भवेत् ३०
षडंशं कुमुदोत्सेधमालिङ्गं त्वेकभागया
त्रिपट्टं त्वेकभागेन प्रत्युत्सेधं द्विभागया ३१
वाजनं चैकभागेन प्रतिबन्धमिदं जगत्
उपानरहितं शेषं पूर्ववत् नैकधापिवा ३२
अधिष्ठानस्य चोत्सेधं पञ्चविंशति भाजिते
शिवांशं पादुकोत्सेधं जगती वसुभागया ३३

धात्वंशं कुमुदोत्सेधं व्योमांशं कंपमानकम्
अनलांशं गळोत्तुंगं शश्यंशं चोर्ध्वकंपकम् ३४
महापट्टी गुणांशं तदूर्ध्वमंशेन कंपकम्
पादबन्धमिति ख्यातमुपानरहितं तथा ३५
एतच्च पादबन्धं च नानाभेदेन कीर्तितम्
त्रिसप्तांशे तलोत्सेधे कृतेंशेनैकपादुका ३६
अम्बुजं सार्धभागेन कंपमर्धांशमुच्यते
सप्तांशं जगती तूर्णं रसांशं कुमुदोदयम् ३७
आलिंगमेकभागेन त्रिपट्टं त्वेकभागया
द्विभागं प्रतितुंगं स्यात् भागेनैकेन वाजनम् ३८
प्रतिबन्धमिदं नाम्ना प्रतिबन्धे तु भेदितम्
तदेवं पद्मभागे तु उपानं परिकीर्तितं ३९
आलिंगं च द्विभागेन शेषं पूर्ववदेव हि
उपानोपरिपद्मं च कंपं चैकं परित्यजेत् ४०
तच्च प्रतिक्रमं ख्यातं सर्वदेवालये हितम्
षड्विंशद्विभजेदुच्चं समुवाचैकभागया ४१
द्विभागेन दलं कुर्यात्कंपमेकेन कारयेत्
षडंशं जगतीरुच्चामेकांशं दलमानकम् ४२
खण्डमेकेन कर्तव्यमेकेनाब्जं तु कारयेत्
कुमुदोच्चं गुणांशेन पद्ममेकेन कारयेत् ४३
कंपमेकेन कर्तव्यं कण्ठोच्चं तु द्विभागकम्
एकांशं कण्ठतुंगं तु तत्समं तु दलोदयम् ४४
महापट्टी द्विभागेन दलमेकांशमानतः
कंपमेकेन कर्तव्यमष्टाश्रं कुमुदं कुरु ४५
अंभोजकेसरं ख्यातं पादपूज्यं तु भेदितम्

एकोनविंशदंशं तु तलोत्सेधे विभाजिते ४६
उपानमेकभागेन अंभोजमनलांशकम्
कंपोच्चं मध्यभागेन जगत्युच्चं युगांशकम् ४७
अंबुजं त्वर्धभागेन दळमर्धांशमानतः
अर्धांशं पद्मतुंगं तु गुणांशं पट्टमानतः ४८
पद्ममर्धांशमानेन तत्समं कंपमुच्यते
अत्यर्धांशं तु खण्डोच्चं कंपमर्धेन कारयेत् ४९
पद्ममंशेन कर्तव्यं पट्टिका सार्धभागतः
अंबुजं सार्धभागेन कंपमध्येन कारयेत् ५०
पुष्पपुष्कलमाख्यातं पादबन्धं तु भेदिनं
द्वात्रिंशद्विभजेदुच्चमुपोपानं द्विभागया ५१
उपानं त्वेकभागं स्यात्सप्तांशं कमलोदयम्
कण्ठमेकेन कर्तव्यं पद्ममेकेन कारयेत् ५२
कुमुदोच्चं चतुर्भागमेकांशं दलमुच्यते
कंपमेकेन कर्तव्यं गुणांशं गलमानतः ५३
कंपमेकेन कर्तव्यं ऊर्ध्वकंपं प्रकल्पयेत्
कपोतोच्चं गुणांशेन आलिंगं त्वेकभागतः ५४
एकेनान्तरितं कुर्यात्प्रतितुंगं द्विभागतः
वाजनं तु द्विभागेन कल्पयेत्तु प्रमेण तु ५५
प्रतिबन्धे तु भेदं स्यात् श्रीबद्धान्तमुदाहृतम्
अष्टकानस्य चोत्सेधमष्टाविंशतिभाजिते ५६
उपानं त्वेकभागेन जगत्युच्चं रसांशकम्
कुमुदं पञ्चभागेन कंपमेकेन कारयेत् ५७
गुणांशं गलमानं तु कंपमेकेन कल्पयेत्
पद्ममेकेन कर्तव्यं कपोतोच्चं गुणांशकम् ५८

आलिंगं त्वेकभागेन त्वरितं तु प्रकल्पयेत्
प्रतीतं यद्विभागेन शतांशं वाजनोदयम् ५९
प्रतिबन्धस्य वर्गं स्यान्मञ्चबन्धमुदाहृतम्
तदेवालिंगकादूर्ध्वं विभज्यं विंशदंशकैः ६०
कल्प्यं श्रीकान्तवन्नाम्ना पादबन्धे तु भेदितम्
तुंगे षड्विंशदंशे तु एकांशं पादुकं भवेत् ६१
द्विभागं दलमानं तु कंपोच्चं शशिभागकम्
षडंशं तु जगत्युच्चं चतुर्भागं घटोदयम् ६२
कंपमेकेन कर्तव्यं पद्मोच्चं तु द्विभागतः
ऊर्ध्वकंपमथैकांशं गलमानं द्विभागकम् ६३
वाजनं त्वेकभागेन सार्धांशं कमलोदयम्
कंपमेकेन कर्तव्यं श्रेणी बद्धमिदं भवेत् ६४
पादबन्धे तु भेदं स्यात् सिंहे भाद्यैर्विभूषितम्
त्रिषडंशतलोत्सेधं कृत्वा सार्धांशपादुकम् ६५
कंपमर्धांशमित्युक्तं भूतांशं पंकजोदयम्
गलमन्येन कर्तव्यं पद्ममेकेन कारयेत् ६६
कुमुदोच्चं त्रिभागैकं दलमेकेन कारयेत्
आलिंगमेकभागेन त्वरितं तत्समं भवेत् ६७
वृतेरुच्चं द्विभागेन वाजनं त्वेकभागकम्
अब्जबन्धमिदं नाम्ना भेदे तत्प्रतिबन्धके ६८
तलं द्वाविंशदंशे तु द्विभागं पादुकोन्नतम्
अब्जमेकेन कंपं तु एकांशेन प्रकल्पयेत् ६९
जगती पञ्चभागे तु कुमुदं चतुरंशकम्
पद्ममेकेन कर्तव्यं कंपमेकेन कारयेत् ७०
कण्ठतुंगं द्विभागेन कंपमेकेन कारयेत्

शिवांशं दलतुंगं तु महापट्टी द्विभागया ७१
कंपमेकेन कर्तव्यं वप्रबन्धमिति स्मृतम्
पादबन्धस्य वर्गं स्यात् सर्वधामसु पूजयेत् ७२
तन्महापट्टिकामानं कपोतं वातबन्धकम्
कपोतो परिकंपोर्ध्वे त्रिपट्टं त्वेकभागया ७३
प्रत्युत्सेधं द्विभागेन वाजनं त्वेकभागया
तुंगे षड्विंशदंशे तु कल्पयेत्प्रतिसुन्दरम् ७४
आधीनस्यादिचोत्सेधं त्रयोविंशति भाजिते
उपानमेकभागेन पद्ममेकेन कंपकम् ७५
अंशेन पट्टिकां विद्यात् कंपमेकेन कल्पयेत्
पद्ममेकेन कण्ठान्तमेकांशेनैव कल्पयेत् ७६
एकांशेनांबुजं कुर्याद्गुणांशं कुमुदोदयम्
पद्ममेकेन कर्तव्यमालिङ्गं त्वेकभागया ७७
त्रिपट्टं शिवभागं तु द्विभागं प्रतिमानकम्
वाजनं त्वेकभागेन कल्पयेत्तु यथाक्रमम् ७८
प्रतिबन्धे तु भेदं स्यात् श्रीकण्ठान्तमुदाहृतम्
उपानमेकभागेन पद्ममेकेन कंपकम् ७९
द्व्यंशेन पट्टिका कंपमेकांशेन प्रकल्पयेत्
गळमेकेन कर्तव्यं पद्ममेकेन कारयेत् ८०
कुमुदं तु त्रयांशेन पद्ममेकांशमानतः
आलिंगं त्वेकभागेन त्वरितं शशिभागया ८१
अधिष्ठानस्य चोत्सेधं द्वाविंशति विभाजिते
एतत्करीरबन्धं स्यात्प्रतिबन्धे तु भेदितम् ८२
पादुकं चैकभागेन भागेनाब्जं तु कंपकम्
कंपमेकेन कर्तव्यं कण्ठमानं द्विभागतः ८३

कंपमेकेन भागेन पट्टिकांशेन कंपकम्
द्विभागं दलमानं तु गळमेकांशमानतः ८४
अंबुजं त्वेकभागेन कुंभमानं गुणांशकम्
एकांशं दलमानं स्यात् द्व्यंशेनालिंगमुच्यते ८५
त्रिपट्टं त्वेकभागेन प्रतिमानं द्विभागया
वाजनं त्वेकभागेन भानुद्विगुणितांशके ८६
एतच्च प्रतिबन्धं स्यात् भेदं कलशबन्धनम्
अधिष्ठानस्य चोत्सेधं चतुर्विंशति भाजिते ८७
पादुकं तु द्विभागेन तत्समं पंकजोदयम्
अब्जमेकेन कर्तव्यं जगच्चं रसांशकम् ८८
पद्ममेकेन भागेन कण्ठं पद्मं तु भागया
ईशांशं कलशोत्सेधं कमलं त्वेकभागया ८९
प्रतिबन्धे तु भेदं स्यात् श्रीकारं नाम तूच्यते
भानुद्व्यंशे तलोत्सेधे द्विभागं पादुकोदयम् ९०
उपानं तु शिवांशं स्यात् षडंशं दलमानकम्
कण्ठमंशेन कर्तव्यमंशेनाब्जं प्रकल्पयेत् ९१
गुणांशं खण्डमानं तु दलमेकेन वृत्तकम्
कम्पमेकेन कण्ठं तु गुणांशं दलमानकम् ९२
व्योमांशं दलमानं तु द्विभागं पट्टिका भवेत्
एकांशं दलमानं तु कंपमेकेन कारयेत् ९३
सुन्दराणां ह्यंबुजानां पादबन्धे तु भेदितम्
चतुस्सप्तद्विभागं तु तलमाने द्विभाजिते ९४
द्विभागं पादुकं ख्यातं दलमानं युगांशकम्
गळमेकेन कर्तव्यमंबुजं तु द्विभागया ९५
द्विभागं पट्टिकामानमंशं पादुकमुच्यते

जगती चतुरश्रं तु पद्ममंशं द्विजोत्तम ९६
कराठमंशेन पत्रं तु शश्यंशं प्रतिधीयते
गुणांशं कुमुदोत्सेधं पद्ममंशेन कल्पयेत् ९७
कंपमंशेन कर्तव्यं त्रिपद्मं त्वेकभागया
प्रतिमानं भवेत् द्व्यंशं वाजनं तु शिवांशकम् ९८
एवं नळिनकान्तं स्यात्सर्वदेवप्रियावहम्
त्रयोविंशतिभागे तु तलोच्चे तु विभाजिते ९९
सार्धांशं पादुकोत्सेधमुपोपानंशतांशकम्
अधः पद्मं द्विभागं स्यादेकांशं कराठमुच्यते १००
तदुद्वेपनमेकांशं कुमुदोच्चं गुणांशकम्
तदूर्ध्वं पद्ममेकांशमेकांशमपमानकम् १०१
कराठं द्व्यंशेन कर्तव्यमेकांशं चाथ पट्टिका
एकांशं पद्मतुंगं तु आलिंगं त्वेकभागकम् १०२
त्रिपट्टं तु त्रयांशं तु प्रतिमानं विभागकम्
एकोनार्पजनं कुर्यात्तत् श्रीसौन्दर्यमुच्यते १०३
प्रतिबन्धस्य भेदं स्यादन्तं चापुनराश्रया
चतुर्विंशतिभागे तु तलोच्चे तु विभाजिते १०४
उपानं त्वेकभागेन द्विभागं तु दलोदयम्
तदूर्ध्वे कंपमेकांशं जगत्युच्चरसांशकम् १०५
वेदांशं कुमुदोत्सेधं पद्ममंशेन कल्पयेत्
कराठमेकांशमित्युक्तमूर्ध्वे पद्मं शिवांशकम् १०६
वाजनोच्चं द्विभागेन एकांशं पद्मतुंगकम्
आलिंगं त्वेकभागेन त्रिपट्टं तत्समं भवेत् १०७
प्रतिमानं द्विभागं स्याद्वाजनं त्वेकभागया
स्कन्दस्कन्दमिदं नाम्ना प्रतिबन्धस्य भेदकम् १०८

धरातलोच्चं विभजेत्त्रयोविंशतिभागकम्
उपानोदयमेकांशं षडंशं त्वंबुजोदयम् १०९
एकांशं कराठमानं तु ऊर्ध्वे पद्मं शिवांशकम्
युगांशं तु घटोत्सेधमेकांशं पद्मकंपकम् ११०
कंपमेकेन कर्तव्यं द्विभागं कन्धरोदयम्
एकांशं कंपमानं तु ऊर्ध्वे पद्मं तु तत्समम् १११
कपोतोच्चं गुणांशं तु अलिन्द्रं त्वेकभागकम्
एतच्चांबुजकान्तं स्यात्पादबन्धे तु भेदितम् ११२
एवं त्वनेकभेदेन प्रोच्यते तु धरातलम्
तलोत्सेधमिवात्रस्याद्धीनाधिक्यान्नदोषभाक् ११३
अंशं वार्धं त्रिपादं वा बलांगावबलान्वितम्
त्रिपट्टस्य विशालं तु द्विविधं प्रविधीयते ११४
मूलपादसमव्यासं पादमूले त्रिपट्टकम्
पादान्तरे त्रिपट्टानां व्यासं त्रिपाददराडकम् ११५
पादबाह्ये समावेशं नीप्रं चैव समं भवेत्
अयुग्मं युग्मसंख्या वा पादान्तरे प्रकल्पयेत् ११६
हेमैर्वा मकरैर्यालिभूतहंसैर्विभूषितम्
प्रत्यग्रं मकरैर्व्यालैर्विद्याधरविनिर्मितम् ११७
त्रिपट्टोर्ध्वे प्रतिं ह्येवं सर्वत्र परिकल्पयेत्
ऊर्ध्वाधस्त्वंबुजोपेतं कुमुदं वृत्तमाचरेत् ११८
अन्ये वै कुमुदं सर्वे प्रतिबन्धांघ्रिबन्धयोः
वृत्तं च वसुकोणं च क्रमेणैव प्रकल्पयेत् ११९
इति काश्यपशिल्पे अधिष्ठानविधिर्नाम षष्ठः पटलः

## अथ सप्तमः पटलः

## नाळप्रतिष्ठाविधिः

अथ वक्ष्ये विशेषेण निर्माल्यद्वारलक्षणम्
प्रतिबन्धे प्रतेरन्तेदनन्ये पट्टिकान्तके १
दलान्ते कुमुदं चैव वप्रान्ते पादुकान्तके
छिद्रं कुर्यात्तथा चोर्ध्वे गलं तस्मात्सुयोजयेत् २
भान्वंगुळं समारभ्य गुणांगुलविवर्धनात्
चतुर्विंशांगुलं यावत्तावत्पञ्चविधं तथा ३
भित्तिबाह्यगतं ह्येवं तस्यार्धं गर्भगेहके
वेशयित्वाथवा भित्तेर्ह्यभ्यन्तरसमं तु वा ४
वस्वंगुलं समारभ्य द्विद्व्यंगुलविवर्धनात्
कलांगुलावसानं तु विस्तारं पञ्चधा क्रमम् ५
तन्मूलं तारपञ्चांशं त्रयांशं त्वग्रविस्तृतम्
तद्विस्तारसमं वाथ त्रिपादं वाथ तद्धनम् ६
विस्तारस्य त्रिभागैकं छिद्रं तारोन्नतं तथा
नालमध्ये तु कर्तव्यं निम्नोन्नतविवर्जितम् ७
मूलादग्रोन्नतं किञ्चित् मूलं हंसस्य चान्वितम्
गजोष्ठसदृशालंबं यथा सुन्दरमाचरेत् ८
व्याळः सिंहोऽथ भूतो वा नाळं धृत्वा तु संस्थितः
नाळमेकं तु कर्तव्यं सौम्यं प्रासादमध्यगम् ९
स्थापयित्वा विशेषेण अनेन विधिना तथा
नाळं गन्धोदकैर्दिव्यैः स्थापयित्वा हृदा बुधः १०
शान्तिहोमं तु कुर्वीत वारुणं सूक्तमुच्चरन्
स्थापकः सुप्रसन्नात्मा सुमुहूर्ते सुलग्नके ११
नाळं तु स्थापयेत् धीमान् स्थपतिः स्थापकान्वितः

सर्वालंकारसंयुक्तं सर्वतोयसमन्वितम् १२
सुधया गुडतोयैश्च बन्धयेत् सुदृढं यथा
पुंशिलायां तु कर्तव्यं नाळं तु द्विदलान्वितम्
नाळस्थापनमेवं तु स्तंभलक्षणमुच्यते १३
इति काश्यपशिल्पे नाळलक्षणप्रतिष्ठाविधिर्नाम सप्तमः पटलः

## अथाष्टमः पटलः

### पदवर्गः

अथ वक्ष्ये विशेषेण चरणायामविस्तरम्
आकारं भूषणं चैव संक्षेपात् शृणु सुव्रत १
स्तंभं च तलिपं चैव चरं जंगममेव च
स्थाणुः स्थूणश्च पादश्च पर्याय वचनानि च २
उक्तोत्सेधांशमानेन पादायामो विधीयते
उक्ताधिष्ठानतुंगस्य द्विगुणं वांघ्रितुंगकम् ३
तस्मात्तरनलोच्चं वा षष्ठांशमधिकं तु वा
पादोच्चं पङ्क्तिनन्दाष्टभागैकं पादविस्तरम् ४
दारुपादतलं ह्येतत् कुड्यपादमथोच्यते
तदर्धं वा त्रिभागैकं चतुर्भागोनमेव वा ५
आढ्यस्तंभविशालं स्यादेतत्सर्वं सुधर्मसु
प्रतेरुत्तरसीमान्ते विशालस्तंभ उच्यते ६
उपानाद्युत्तरान्तस्थः निवातांघ्रिस्तदुच्यते
तुंगं सप्तांशमथवा नवधर्मांशमेव वा ७
रुद्रभान्वंशकं वाथ कृत्वैकांशांघ्रिविस्तरम्
तन्मूलतारमाख्यातं तत्तारं तु तथा भवेत् ८
एकभागविधीनं तु शेषमग्रविशालकम्

एकादिषोडशान्तं च तलं प्रत्येवमाचरेत्  ९
मूलादाग्रं युगाश्रं तु कुंभमन्थादिसंयुतम्
ब्रह्मकान्तमिति ख्यातं वस्वश्रं विष्णुकान्तकम्  १०
रसाश्रमिन्दुकान्तं स्यात् चंद्रकान्तं तलाश्रकम्
कण्ठमानेन तन्मूलं तथैवाग्रं प्रकल्पयेत्  ११
स्तंभाग्रे चैतन्मूले चतुरश्रसमन्वितम्
तयोर्मध्येऽपि वस्वश्रं षोडशाश्रमथापि वा  १२
वृत्ताकारं तु वा वप्रं कुंभमण्ड्यादिसंयुतम्
कुंभमण्ड्यादिहीनं वा तदाहुः रुद्रकान्तकम्  १३
मूलादग्रविशालं तु मध्येष्टाश्रं द्विदण्डकम्
रुद्रकान्तमिति ख्यातं मूलमग्रं तु वर्तुलम्  १४
कुंभमण्ड्यादितन्मध्ये ऋष्टाश्रं तावदुच्यते
चतुरश्रमधोभागे ऋष्टाश्रं मध्यमं तथा  १५
तदूर्ध्वे वृत्तमेवं स्यात्त्रिभागं तुंगसदृशं
शिवच्छन्दमिति ख्यातं शिवहर्म्ये प्रसंस्थितम्  १६
दण्डं सार्धं द्विदण्डं वा मूलपद्मासनोदयम्
द्विगुणं पत्रविस्तारं पद्माकारं तु कारयेत्  १७
तन्मध्ये कर्णिकायां तु चरणस्थापनं कुरु
यथेष्टाकृतिसंयुक्तं कुंभमण्ड्यादिसंयुतम्  १८
चक्रवाकतलं मध्ये भूषितं पद्मपादुकम्
पत्रमूलांघ्रिमध्ये तु व्यालेन व्यालपादुकम्  १९
मूलेभपादमानेन गजपादमुदाहृतम्
मूले बिंबादिभिः कुर्यात् यथेष्टाकृतिसंयुतम्  २०
कुंभमण्ड्यादिसंयुक्तं तत्तन्नाम्ना प्रकीर्तितम्
वृत्ताकारे तदायामे शुण्डुभेदैस्समन्वितम्  २१

कुंभमण्ड्यादिसंयुक्तं शुण्डुपादमुदाहृतम्
मुक्तादामैरलंकृत्य पिण्डिपादमुदाहृतम्  २२
विष्कंभकर्णमानेन स्तंभाग्रे चतुरश्रकम्
तदयस्त्वर्धदण्डान्तमब्जमष्टाश्रसंयुतम्  २३
दण्डमानेन तस्याधः वस्वश्रं परिकल्पयेत्
तदधः पूर्ववत्पद्मं तस्याधो दण्डमानतः  २४
चतुरश्रसमायुक्तं तस्य छत्रं तु पूर्ववत्
मूले वा वेदशेषाश्रं छत्रखण्डं तदुच्यते  २५
मध्यपट्टं तु वस्वश्रं श्रीकण्ठं तदुदाहृतम्
मध्ये पट्टं कलाश्रं चेत् श्रीवज्रं स्तंभमुच्यते  २६
मूलादाग्रं युगाश्रं स्यात्त्रिपट्टं क्षेपणान्वितम्
क्षेपणस्तंभमाख्यातं पट्टं पत्रादिशोभितम्  २७
स्तंभाकारत्रिभागैकं चतुर्भागैकमेव वा
स्तंभमध्ये शिखां कुर्यात् एतत्स्तंभविशेषतः  २८
स्तंभमूले तु पद्मादिस्तंभमाने तु कल्पयेत्
स्तंभलक्षणमाख्यातं बोधिकालक्षणं शृणु  २९

इति काश्यपशिल्पे स्तंभलक्षणं नाम अष्टमः पटलः

अथ नवमः पटलः

बोधिकालक्षणम्

अथ वक्ष्ये विशेषेण बोधिकालक्षणं परम्
मूलपादस्य पादेन श्रेष्ठे मध्ये तु मध्यमम्  १
अग्रपादविशालं स्यात् समं कन्यसबोधिकम्
विस्तारसदृशोत्सेधं पञ्चदण्डायतान्वितम्  २
उत्तमा बोधिकाख्याता तारद्वित्र्यंशमुन्नता

चतुर्दराडायतोपेता मध्यमासाप्रकीर्तिता ३
विस्तारस्यार्धतुंगं तु गुणदराडायुतान्वितम्
कन्यसाबोधिकाख्याता त्वंघ्रयो बोधिकान्विताः ४
बोधिकाश्च त्रिभागे तु एकांशेनार्धपट्टिकम्
मध्यांशेन तरंगं स्यात् लताद्यैः भूषितं तु वा ५
तदधस्त्वेकभागेन मुष्टिबन्धं च कारयेत्
दराडत्रिपादमर्धं वा छायामानं तदंशके ६
ऊर्ध्वाधः पट्टिकाधस्तात् छायाकारं प्रकल्पयेत्
अधस्तात् बोधिकाकारमलंकारं वदाम्यहम् ७
मध्ये पट्टं त्रिभागैकं विस्तारार्धमथापि वा
पार्श्वयोरुभयोश्शेषं तरंगस्थानमुच्यते ८
सक्षुद्रक्षेपणं मध्यात्पटपत्राद्यलंकृतम्
पार्श्वयोस्तु तरंगं स्यात्समाच्चान्योन्यहानकम् ९
बोधिविस्ताररन्ध्रं वा त्रिपादं वाऽग्रनीलकम्
तन्मूलसदृशं व्यासं बोधिकायाः प्रकल्पयेत् १०
अन्यत् बोधं षडंशांशं कृत्वोर्ध्वं पट्टिकान्वितम्
ऊर्ध्वपद्ममथांशेन कराठमन्येन कारयेत् ११
अधः पद्मं द्विभागेन चोर्ध्वं पट्टांशमुच्यते
अधस्त्वंबुजमध्यांशं कल्पयेत्तु क्रमेण तु १२
पद्मस्य मुकुलाकारमग्रादधो गतं कुरु
अग्रं निष्क्रामयुक्तं वा छायाकारमथापि वा १३
पार्श्वयोः मुष्टिबन्धाग्रं व्याल आपादिकल्पितम्
भुजे वा मकरैर्व्यालैः पट्टकाद्यैर्विभूषितम् १४
रत्नबन्धक्रियावल्ली चित्रवाग्रस्तपट्टिका
बोधिकाया तरंगाढ्या तन्मध्ये दराडमानतः १५

युगाश्रं पट्टसंयुक्तं तारोच्छायं तु वृत्तकम्
नानाचित्रैरलंकृत्य बोधिका चित्रबोधिका १६
पत्रैर्विचित्रता पत्रबोधिका तु प्रकीर्तिता
महार्णवतरंगाभतरंगांस्तु प्रकल्पयेत् १७
पादमर्धं त्रिपादं वा भित्तिस्तंभस्य निर्गतम्
चतुरष्टाश्रवृत्तानां क्रमात्साधारणं तु वा १८
बोधिकायास्तथाग्रे तु वीरकण्ठं युगाश्रकम्
अग्रपादसमं तच्च त्रिपादं तुंगमुच्यते १९
सर्वेषामपि पादानां वीरकण्ठं युगाश्रकम्
अधस्ताद्वीरकण्ठं स्यात् फलिकालक्षणं शृणु २०

अथ फलिकालक्षणम्

अथ वक्ष्ये विशेषेण फलिकानां तु लक्षणम्
त्रिदण्डं फलिका व्यासं कन्यासार्धाधिकं समम् २१
चतुर्दण्डविशालं तु उत्तमा लम्भका भवेत्
अथवा फलकाव्यासं कुंभकर्ण समं भवेत् २२
सर्वेषां फलकानां तु तुंगं पादो न दण्डकम्
तदुत्सेधं त्रिधाभज्य ऊर्ध्वं तत्सन्धिरच्यते २३
तथार्धो पेतमेकांशं तस्याधस्त्वंबुजांशकम्
नागपत्रसमाकारमपेतो पादरूपकम् २४
सर्वेषां फलकानां तु उत्सेधार्थं युगांशकम्
फलकमेवं प्रकर्तव्यं तस्याधस्तात् घटं कुरु २५
द्विदण्डं पादहीनं वा सार्धदण्डमथापि वा
सपाददण्डतुंगं वा घटोच्चं तु चतुर्विधम् २६
प्रियदर्शनं सौम्यं च चंद्रकान्तं च श्रीकरम्
यथाक्रमेण नामानि कलशानां क्रमादितः २७

घटोच्चं वै नवांशेन हृद्भागे परिकल्पयेत्
वेदांशं कलशोत्सेधं कण्ठमेकांशमानतः २८
आस्योच्चमेकभागेन पद्ममेकेन कारयेत्
अधोनावृत्तमंशेन हीनौ संकल्पयेत् बुधः २९
ऊर्ध्वोदयगतं कुर्यात् अनेन विधिना क्रमात्
एवमुच्चं समाख्यातं विष्कंभमधुना शृणु ३०

अथ विष्कंभलक्षणम्

पादव्याससमौ हीनौ तत्कण्ठस्यास्य विस्तृतम्
अस्य कण्ठविशेषेण कुंभस्योपरिविस्तृतम् ३१
स्तंभे व्याससमं प्रोक्तं विस्तारे तच्च कर्णयोः
तस्याधो लश्नुनं मूलात्कल्पयेत्कल्पवित्तमः ३२
अथवा बोधिकादीनामुदयं तु वदाम्यहम्
गुणांशं चरणोत्सेधं कृत्वाधो द्व्यंशकं व्रजेत् ३३
ऊर्ध्वभागं तु संग्राह्यं द्वाविंशत्यंशकं व्रजेत्
युगांशं बोधिकोत्सेधं वीरकण्ठं च तत्समम् ३४
भूतांशं फलकोत्सेधं मध्यमूलं शिवांशकम्
समोत्सेधं तु वेदांशं शिवांशं कण्ठमानकम् ३५
तदास्योदयमेकांशं पद्ममेकेन कारयेत्
वृतमन्धेन कर्तव्यं हीनं तत्सममुच्यते ३६
लश्नुनाब्जलतामुक्तं मालामानादिपूर्ववत् ३७
स्तंभभूषणमेवं स्याद्वेदिकालक्षणं ततः ३८

इति काश्यपशिल्पे बोधिकादिलक्षणविधानं नाम नवमः पटलः

अथ दशमः पटलः

वेदिकालक्षणम्

अथ वक्ष्ये विशेषेण वेदिकालक्षणं परम्
अधिष्ठानोपरिष्टात्तु स्तंभमूले च कल्पयेत् १
प्रस्तारं सोपरिष्टात्तु कर्तव्या वेदिका द्विज
अध्यर्धदण्डमानं तु कन्यसा वेदिका मता २
द्विदण्डोदयमध्यं स्याच्छ्रेष्ठं तुंगं त्रिदण्डकम्
अथवान्यप्रकारेण वेदिकोत्सेधमुच्यते ३
चरणोदयं तु षट् सप्तवसुभागविभाजिते
एकांशं वेदिकामानं कार्यं श्रेष्ठमधोधमम् ४
एवं हि चरणानां तु मूले तु वेदिकोदयम्
ऊर्ध्वमप्यंघ्रितुंगे तु सप्तभागविभाजिते ५
एकांशं खण्डहर्म्याणां वेदिकोदयमिष्यते
त्रिचतुः पञ्चभागं तु गलोत्सेधं विभाजिते ६
गलमुच्चतमेकांशं श्रेष्ठमध्याधमं तथा
अर्धोत्सेधांशमानं वा दण्डमूले तु वेदिका ७
षडंशे वेदिकोत्सेधं गुणांशं गलमानकम्
गलोर्ध्वे कंपमेकांशमेकेनाब्जं प्रकल्पयेत् ८
तदूर्ध्वे कंपमेकांशं कर्तव्यं द्विजसत्तम
सप्ताष्टांशे तु वेद्युच्चे चेदभूतं क्रमाद्गलम्
कंपं पद्मं च कंपं च प्रागिवैव प्रकल्पयेत् ९
कण्ठमानेन तन्मूलकंपमेकेन कल्पयेत् १०
शेषं कण्ठोदयं प्रोक्तं तत्कंपरहितं तु वा
अत्यर्धांशं तु वा पद्मं तुंगं द्व्यंशमथापि वा ११
पद्मशैलसुपत्राभा चित्रांशा वेदिकाऽथवा
सर्वेषां वेदिकानां तु गलमङ्घ्रिविभूषितम् १२
कुडयस्तंभसमव्यासान्नीप्रं वा वेदिकांघ्रिका

प्रोपरितवेदीनां वेशनं शृणु सुव्रत १३
गर्भभित्तित्रिभागैकमंघ्रिवेद्यंघ्रिवेशनम्
चतुर्भागैकभागं वा पञ्चभागैकमाभजेत् १४
एकांशरहितं शेषं वेदिकायास्तु विस्तृतम्
युगांशं वेदिकाकारं नागरे प्रस्तरोपरि १५
प्राविडे वेसरैर्हर्म्यैर्वस्वग्रं वेदिकाकृति
अथवा वेसुराहर्म्यवेदिकाग्रत एव वा १६
अनेकाश्रयताश्रे च गळाग्रं वेदिकाश्रया
वेदिकालक्षणं प्रोक्तं ततो जालकलक्षणम् १७
इति काश्यपशिल्पे वेदिकालक्षणं नाम दशमः पटलः

## अथैकादशः पटलः

## जालकलक्षणम्

अथ वक्ष्ये विशेषेण शृणु जालकलक्षणम्
पादवर्गगळे चैव जालकस्थानमुच्यते १
प्रासादेषु सहावास्त्वन्तराले चैव मध्यमे
पादात्पदं न कर्तव्यमनेन विधिना बुधः २
योजयेत् वेदिकोर्ध्वे तु जालकं तु द्विजोत्तमाः
वेदिकाजालकार्थं न छेद्या सर्वविनाशनम् ३
तद्यथा वेदिकाजालं कार्यं न छेदयेत्तथा
द्विदण्डं कन्यसं व्यासं त्रिदण्डं मध्यमं भवेत् ४
चतुर्दण्डविशालं तु ह्युत्तमं परिकीर्तितम्
विस्तारसदृशोत्सेधमेकदण्डादिवर्धनात् ५
विस्तारद्विगुणं वाथ तावद्वै जालकोत्तमम्
येषु तुंगविशाले तु यदिष्टं तु परिग्रहेत् ६

स्तंभव्यासार्धमानं तु घनं व्यासाङ्घ्रिकंपयोः
विस्तारार्थायनं वा तच्चतुर्थांशमेव वा ७
मध्यस्थं च रन्ध्रं च वर्ज्यं जालकमाचरेत्
युग्मं पादं समायुक्तमयुग्मं कंपमुच्यते ८
गोनेत्रं हस्तिनेत्रं च नन्द्यावर्तं ऋजुक्रियम्
पुष्पकर्णं सकर्णं च जालकं षड्विधं भवेत् ९
दीर्घाश्रं कराटकच्छिद्रं गोनेत्रमिति संज्ञितम्
युगांशं कर्णकच्छिद्रं हस्तिनेत्रमुदाहृतम् १०
पञ्चसूनं तु यत् छिद्रं प्रदक्षिणवशाकृति
नन्द्यावर्तस्य पुष्पाभं नन्द्यावर्तमिति स्मृतम् ११
आर्जुकालौ स्तंभकंपौ द्वौ जालं तदृजुक्रियम्
पुष्पकराठं सकर्णाभं नन्द्यावर्तमिवाकृति १२
स्तंभयोगं कवाटं च भित्तिमध्यबहिःस्थितम्
युग्मायुग्मं कवाटं वा घाटनोद्घाटनक्षमम् १३
जालकं तु सभादीनां पदतोर्धेन कल्पयेत्
लोहद्रुमफलैर्दिव्यैर्वेष्टकाभित्तिजालकम् १४
यत्रोचितं तु यत् द्रव्यं तेन तत्रैव योजयेत्
जालकं ह्येवमाख्यातं ततस्तोरणलक्षणम् १५

इति काश्यपशिल्पे जालकविधानं नाम एकादशः पटलः

## अथ द्वादशः पटालः

### तोरणलक्षणम्

अथ वक्ष्ये विशेषेण तोरणानां च लक्षणम्
पादोदये दशांशे तु सप्तांशं चरणोदयम् १
शेषं त्वनलभागं तु झषमानमुदाहृतम्

नवांशे पादतुंगे तु षडंशं चरणोदयम् २
शेषं झषादयं ख्यातमष्टांशे चांघ्रितुंगके
पञ्चांशं चरणोत्सेधं गुणांशं कंपतुंगकम् ३
तुंगं वा विपुलं वापि देवभूतरसांघ्रिकम्
तोरणस्य तु पाद्बाह्वोः व्यासमेवं चतुर्विधम् ४
प्रासादमण्डपादीनां मध्यभागे तु तोरणम्
अनेन विधिना विप्र कर्तव्यं कुड्यबाह्यके ५
पत्राख्यं तोरणमेकं द्वितीयं करतोरणम्
तृतीयं चित्रसंज्ञं तु त्रिविधा तोरणाकृतिः ६
अर्धचंद्रमिवाकारं पत्रराजिविराजितम्
पत्रतोरणमाख्यातं ततो मकरमुच्यते ७
पञ्चवक्त्रसमायुक्तं पार्श्वयोः मकरास्यकम्
मध्ये पूरिमसंयुक्तं नानाफललतान्वितम् ८
नानालंकारसंयुक्तं वृत्तं मकरतोरणम्
तदेव पार्श्वयोर्मध्ये पूरिमस्य द्वयोरपि ९
नक्रतुण्डं प्रकर्तव्यं भूतविद्याधरास्तथा
सिंहव्यालकहंसाद्यैः बलाग्रन्मुक्तमादकैः १०
अन्यैश्च विविधैश्चित्रैः रत्नसंघैश्च भूषयेत्
चित्रतोरणमेवं स्यात् प्रोच्यते तोरणत्रयम् ११
तोरणं चान्तराऽधस्तात् प्रयोज्यानि विचक्षणैः
---पार्श्वयोः विकरण्डसमन्वितम् १२
बोधिकारहितं यत्तत्स्तंभं तु गलतास्मृता
स्तंभतोरणवन्मूलर्ध्नि कर्तव्यं तोरणद्वयम् १३
एवं तत्त्रिविधं नीत्वा द्विज कुंभलतोच्यते १४

इति काश्यपशिल्पे तोरणकुंभलता लक्षणं नाम द्वादशः पटलः

## अथ त्रयोदशः पटलः

### वृत्तस्फाटितलक्षणम्

अथ वक्ष्ये विशेषेण वृत्तस्फाटितलक्षणम्
षडङ्गुलं समारभ्य द्विद्व्यंगुलविवर्धनात् १
कलांगुलावधिर्यावत् तावद्व्यासं तु षड्विधम्
विस्तारार्धं तु तन्नीप्रं द्वात्रिंशत् द्वित्रिभागकम् २
वृत्ताकारसमं तच्च तोरणांघ्रि तु दायतम्
सकन्धरं तदूर्ध्वे तु शुकनासान्वितं तु वा ३
कर्णकूटाकृतिं वाथ वृत्ताकारं प्रकल्पयेत्
स्तंभोत्सेधयुगांशे तु द्विभागं चरणोदयम् ४
प्रस्तरोदयमेकांशं शुकनास्युदयांशकम्
तदेव कूटमानं तु तत्तदुक्तवशान्नयेत् ५
अथवा तरमंचस्य प्रोक्तमार्गेण वा कुरु
वृत्तस्फाटितमेवं हि लतामण्डलमण्डितम् ६
स्तंभाद्यं तोरणं चैव तथा कुंभलता द्विज
वृत्ताख्यं स्फाटितं चैव हारं तारेषु कल्पयेत् ७
स्तंभान्तरे च कर्तव्यं हर्म्यादीनां विशेषतः ८

इति काश्यपशिल्पे वृत्तस्फाटितलक्षणं नाम त्रयोदशः पटलः

## अथ चतुर्दशः पटलः

### स्तंभतोरणलक्षणम्

अथ वक्ष्ये विशेषेण स्तंभतोरणलक्षणम्
योगं वा पञ्चषट्सप्तभागे वै त्रिविधं भवेत् १
शेषं पादोदयं ख्यातमेवं वै त्रिविधं भवेत्
युगाश्रं वसुकोणं वा वृत्तं वा तोरणद्वयम् २

कुंभमराडच्यादिसंयुक्तं पोतिका सहितं तथा
पोतिका रहितं वाथ वीरकाराडसमन्वितम् ३
कुडचस्तंभविशालार्धं त्रिपादं वा समं तु वा
तोरणांघ्रिविशालं तु प्रोच्यते द्विजसत्तम ४
उत्तरं वाजनं साब्ज न्तेपणं न्तुद्रवाजनम्
यथा क्रमेण संकल्प्य अनेन विधिना बुध ५
तोरणांघ्रिविशालं वा त्रिपादं वोत्तरोदयम्
तदर्धं वाजनोच्चं तु तस्यार्धं गळमानकम् ६
गळार्धं न्तेपणं ख्यातं तस्यार्धं न्तुद्रवाजनम्
उत्तरं पोतिकोर्ध्वे तु वीरकाराडं तु वा भवेत् ७
उत्सन्धितानताग्रं तु कुर्यात् मकरविष्टरम्
तोरणाग्रविशालं तु कुडचस्तंभोऽथ आर्धकम् ८
कुडचस्तंभस्य तारान्तर्व्यासं वा तोरणाग्रकम्
स्वांघ्रिवेत्रावसानं वा तस्मात् दराडाधिकं तु वा ९
एवं चतुर्विधं ख्यातं तोरणाग्रविशालकम्
कुडचतोरणमाख्यातं द्वारतोरणमुच्यते १०
द्वारतुल्योन्नतव्यासं तोरणांघ्रितरं समम्
उत्तरं वाजनं वाब्जन्तेपणं चाष्टमंगळम् ११
फलकं पञ्चवक्त्राढचं प्रागुक्तविधिना कुरु
वक्त्राख्यं मकराख्यं वा चित्रतोरणमेव वा १२
मध्योर्ध्वे शूलसंयुक्तं पार्श्वयोश्च समन्वितम्
दर्पणं पूर्णकुंभं च वृषभं युग्मचामरम् १३
श्रीवत्सं स्वस्तिकं शंखं दीपं देवाष्टमंगलम्
श्रीवत्सं मध्यमे कुर्यात् शेषांस्तु तस्य पार्श्वयोः १४
लोहैर्दारुशिलाभिर्वा कर्तव्यं द्वारतोरणम्

द्वारतोरणमेवं हि स्तंभतोरणमुच्यते १५
पादोच्चं तु त्रिधा भज्य द्विभागं चरणोदयम्
पादं सर्वांगसंयुक्तं पोतिकारहितं कुरु १६
उत्तरं वाजनाब्जं च क्षेपणं निम्नवाजनम्
तदूर्ध्वं झषकर्णं तु नानापत्रैर्विचित्रितम् १७
तोरणं मकराख्यं तु मृणाल्यन्वितकन्धरम्
सर्वालंकारसंयुक्तमेतत् स्यात् स्तंभतोरणम् १८
पादान्तरे हारायां वा कर्णप्रासादमध्यमे
शालामध्यान्तराले वा कर्तव्यं सर्वधामसु १९
स्तंभतोरणमाख्यातं शृणु कुंभलताविधिम् २०
इति काश्यपशिल्पे कुड्यद्वारस्तंभतोरणविधिर्नाम चतुर्दशः पटलः

## अथ पञ्चदशः पटलः
### कुंभस्थललक्षणम्

स्तंभमूले तु वेद्यूर्ध्वे पद्मासनं प्रकल्पयेत्
पादव्यापि समं तुंगं सपादं पद्मविस्तृतम् १
पद्मोच्चं वसुधा भज्य कंपमेकांशमेव वा
अधः पद्मं गुणांशं तु एकांशं गळमुच्यते २
ऊर्ध्वमन्त्रद्विभागं तु कंपमेकेन कारयेत्
तदूर्ध्वे कुंभतुंगं तु पद्मस्योच्चं समन्वितम् ३
तत्तुंगद्विगुणं कुंभव्यासमित्यभिधीयते
कुंभास्ये स्तंभनिर्यूहं वलिमण्डलसंयुतम् ४
कुंभमण्ड्यादिसंयुक्तं वीरकाण्डविहीनकम्
फलकोपरिपद्मं तु कुंभमानेन कल्पयेत् ५
कुंभकुंभलता ह्येता ह्यन्यथा वक्ष्यते पुनः

तदेवोत्सन्धिकोर्ध्वे तु वीरकाण्डसमन्वितम् ६
पोतिकारहितं यत्नात्स्तंभकुंभलता स्मृता
स्तंभतोरणवन्मूर्ध्नि कर्तव्यं तोरणालयम् ७
एवं त्रिविधं छित्वा तूच्यते कुंभलता द्विज ८
इति काश्यपशिल्पे कुंभस्थललक्षणं नाम पञ्चदशः पटलः

## अथ षोडशः पटलः

### द्वारविन्यासः

अथ वक्ष्ये विशेषेण द्वारविन्यासलक्षणम्
पादोच्चं दशधा भज्य शुद्धद्वारं नवांशकम् १
चरणं नवधा भज्य अष्टांशं द्वारमानकम्
अथवांघ्रिकतुंगे तु वसुभागविभाजिते २
सप्तांशं द्वारमानं तु रसभागविभाजिते
सार्धपञ्चांशमूर्ध्वे तु भवंगस्योच्छ्रयं भवेत् ३
शुद्धद्वारं तु तुंगार्धं शुद्धद्वारस्य विस्तृतम्
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवांगुलम् ४
तुंगार्धादधिकं हीनं तारमेकोनविंशतिः
भेदमेवं समाख्यातं द्वारतुंगं त्रिधा भवेत् ५
सर्वेषामपि हर्म्याणां द्वारमध्ये तु योजयेत् ६
पादविष्कंभमानं वा सपादं सार्धमेव वा
द्वारयोगस्य विस्तारं तस्यार्धं घनमुच्यते ७
साष्टसार्धघनं वाथ त्रिपादं वाथ तद्धनम्
योगतुंगं तु वेदांशमेकाग्रांशमथोत्तमम् ८
गुणांशमूर्ध्वगं ख्यातं बाह्याब्जक्षेपणाञ्चितम्
बाह्येब्जक्षेपणोपेतं भूतारं तदधो भवेत् ९

पतङ्गतारं योगस्य तुल्याब्जं च विहीनकम्
भुवनं च पतङ्गं च मध्यस्थवलयान्वितम् १०
ताम्रजौ वाऽऽयसौ वाथ वलयौ कीलवद्धितौ
तद्विस्तारत्रिभागैकं शिखायोगप्रवेशितौ ११
शैलजं चेत् भुवंगादि योगभूये शिखान्वितौ
भुवंगपतंगयोरग्रौ छिद्रयोः वेशनान्वितौ १२
एवं दृढी कृतौ पश्चात् योगावस्थानमाचरेत्
सुनक्षत्रे शुभे वारे शुभहोरा मुहूर्तके १३
योगे संस्थापयेद्विप्र शान्तिहोमं परं चरेत्
भित्तिव्यासे तु भान्वंशे बाह्यात् पञ्चावसानकम् १४
अभ्यन्तरं तु सप्तांशं सीमायोगस्य मध्यमम्
तद्बाह्येऽभ्यन्तरं चैव सीमा व्यासोभयाश्रितम् १५
सर्वालंकारसंयुक्तं व्याससाम्य दृढी कृतम्
दक्षिणे तु कवाटे तु योजयेत् द्वारपट्टिकाम् १६
त्रिचतुःपञ्चमात्रं वा द्वारपट्टिकविस्तृतम्
तत्त्रिभागैकभागं तु तस्य नीप्रमुदाहृतम् १७
तन्नीप्रद्विगुणं ख्यातं नीप्रं वै तत्कवाटयोः
नीप्रभायां च मध्ये तु द्वारपट्टिकपार्श्वयोः १८
लोहजं वलयोपेतमेतानि कीलबन्धनम्
लोहजं दारुजं वाथ बाह्याभ्यन्तरगं तथा १९
तासां त्रिमंगलं तावत्तारार्थघनसंयुतम्
बध्वा कवाटे योगौ द्वौ दारुलोहैर्दृढी कृतम् २०
अर्गलादिसमोपेतं घाटनोद्घाटनक्षमम्
परेषां घटयन् तंत्रमप्यसक्तमिवाचरेत् २१
प्रासादे मण्डपे चैव गोपुरे चैवमाचरेत्

द्वारमेवं समाख्यातं कंपद्वारमतः शृणु २२
इति काश्यपशिल्पे द्वारविन्यासलक्षणं नाम षोडशः पटलः

## अथ सप्तदशः पटलः
## कंपद्वारलक्षणम्

अथ वक्ष्ये विशेषेण कंपद्वारविधिं परम्
प्रासादमण्डपादीनां चतुर्दिक्षु विदिक्षु वा १
तयोर्मध्यान्तराले वा व्योमाभीष्टं तु यत्र वै
तत्रैव कल्पयेत् सम्यक् कंपद्वारं द्विजोत्तम २
वक्त्रवीतकृतं पत्तिव्यासयुक्तं विशालकं
स्थलादुत्तरसीमान्तं कंपद्वारोदयं भवेत् ३
भुवङ्गं च पतङ्गं च योगं प्रागुक्तवत् घनम्
कृत्वा दृढी कृतं बध्वा योजयेदन्तरा पुरा ४
योगव्यासं घनं दीर्घं आयामांघ्रि तथा कुरु
मूलाग्रयोजिकोपेतं तरंगांघ्रि प्रकल्पयेत् ५
भुवंगं च पतङ्गं च छिद्रे युञ्ज्यात् दृढी कृतम्
चतुष्षडष्टसंख्यं वा दश द्वादश एव वा ६
मनुषोडशसंख्यं वा कल्पयेदन्तरांघ्रिकम्
अन्तराथ्र्यन्तरा प्रत्यक् गमागमक्षमं विना ७
अन्तरांघ्रीन् प्रयुञ्जीयात् स्थापयेत् द्वारयोगवत्
योजयेत्तु कवाटादि व्योम्नि प्रत्येकमेव तु ८
कवाटे द्विव्योमग्रासत्रिव्योमग्रास एव वा
कल्पयेत् सुदृढं द्वारं त्वचलं हस्तिनापि वा ९
कंपद्वारं समाख्यातं प्रस्तरं तु ततः शृणु १०
इति काश्यपशिल्पे कंपद्वारलक्षणं नाम सप्तदशः पटलः

## अथाष्टादशः पटलः

### प्रस्तरलक्षणम्

अथ वक्ष्ये विशेषेण प्रस्तरस्य तु लक्षणम्
स्तंभार्धं मञ्चमानं तु आर्तोत्सेधांशमेव वा १
तदुच्चे त्वेकविंशांशे कृत्वा गुणांशमुत्तमं
वाजनस्यैकभागेन भूतमालोन्नतं त्रिभिः २
भूतमालोपरिष्टात्तु वाजनं त्वेकभागकम्
सप्तांशं तु कपोतोच्चमालिंगमेकभागकम् ३
अंशेनान्तरितं कुर्यात् वृत्त्युत्सेधं गुणांशकम्
वाजनं त्वेकभागेन कुर्याद्वै चान्यभेदतः ४
तुंगमेकोनविंशांशं कृत्वोत्तरं त्रिभागकम्
भागेन वाजनं कुर्यात् अभ्यंशे वलभी भवेत् ५
वाजनं त्वेकभागेन कपोतोच्चं रसांशकम्
आलिंगमंशमंशेनान्तरितं तु प्रकल्पयेत् ६
वृत्त्युत्सेधं द्विभागेन वाजनस्यैकभागकम्
उत्सेधश्चैवमाख्यातः त्वंगजातमथोच्यते ७
स्तंभात्तु पोतिका नीप्रं बोधिकादुत्तरं तथा
वाजनस्य तु निष्क्रान्तमुत्तरं वाजनोन्नतम् ८
वाजनात् वलभी नीप्रं वलभीतुंगसादृशम्
त्रिपादं वा तदर्धं वा प्रग्वाजनातिविस्तृतम् ९
वाजनानां कपोतस्य नीप्रं होमसमानकम्
उपानस्यावसानं वा जगदतमथापि वा १०
वाजनादर्धदण्डं वा दण्डं सार्धं द्विदण्डकम्
वाजनात्तु कपोतस्य नीप्रं चालंबनं समम् ११
कपोतं गोपानसहितं गोपानरहितं तु वा

पादबाह्यसमं प्रोक्तं कुलिंगवृतिरुच्यते १२
आलिंगान्तरितं वेशं नीप्रं चोत्सेधसदृशम्
वाजनोच्चसमं प्रोक्तं वाजनस्य तु निर्गमम् १३
दण्डं त्रिपादमर्धं वा चोत्तराग्रस्य नीप्रकम्
उत्तरस्यानुकूलं तु वाजने नीप्रवेशनम् १४
वलभी वृतसंसाद्यैर्भूषयेदुत्तरोपरि
नानापत्रलताद्यैस्तु कपोतं कर्णपालिकं १५
प्रत्यग्रमकरीबन्धप्रतिसिंहादिभूषितम्
एवं प्रस्तरवर्गं तु प्रोच्यते तत् द्विजोत्तम १६
इति काश्यपशिल्पे प्रस्तरलक्षणं नाम अष्टादशः पटलः

## अथैकोनविंशः पटलः

### गळभूषणम्

अथ वक्ष्ये विशेषेण गळभूषणलक्षणम्
ऊर्ध्वभौमोच्चतुंगं तु गळमानमुदाहृतम् १
अर्धोत्सेधांशमानं वा गळमानमुदाहृतम्
तदुच्चत्रिचतुष्पञ्च शेषं वा वेदिकोदयम् २
शेषं गळोदयं ख्यातं तमशेषं गळोदयम्
वेदिकायास्तु विस्तारे चतुष्पञ्चषडंशके ३
त्रिचतुष्पञ्चभागं तु गळव्यासं यथा क्रमम्
अङ्घ्रेर्वेध्यङ्घ्रिवेशं स्यात्तद्वेध्यं गळवेशनम् ४
त्रिपादं वा तदर्धं वा वेद्यङ्घ्रेर्गळवेशनम्
एवं त्वनेकभेदेषु कर्तुरिच्छावशान्नयेत् ५
वेदाश्रं नागरे कण्ठं वस्वश्रं द्राविडे गलम्
वृत्तं तु वेसरे हर्म्ये गलमानाकुलं नयेत् ६

दिशिभद्रसमायुक्तं नासिका नकुलांघ्रिकम्
भानुद्व्यंशे गलोत्सेधे कलांशं तु गलोदयम्  ७
उत्तरोच्चं गुणांशं तु वाजनं गलभागकम्
आद्व्यंशं बहुभिर्मानं व्योमांशं वाजनोदयम्  ८
उत्तरार्धगलान्नीप्रं वाजनादीनि पूर्ववत्
अथवा भानुभागे तु गलोदयमुदाहृतम्  ९
उत्तरोच्चं गुणांशं तु शिवांशं वाजनोदयम्
तदूर्ध्वे मुष्टिबन्धं चाप्यध्यर्धांशमुदाहृतम्  १०
मृणाल्युच्चं गुणांशं तु एकांशं पट्टिका भवेत्
सार्धांशं दण्डकोच्चं तु व्योमांशं वर्णपट्टिका  ११
गोपानं कल्पयेदूर्ध्वे उपारोहणमेव वा
वाजनादीनि निष्क्रान्तं तत्तदुच्चसमं भवेत्
एवं गलोन्नतं व्यासमलंकारं च कीर्तितम्  १२
इति काश्यपशिल्पे गळभूषणविधानं नाम एकोनविंशः पटलः

अथ विंशः पटलः

शिखरलक्षणम्

अथ वक्ष्ये विशेषेण शिखरस्य तु लक्षणम्
ऊर्ध्वभूस्तंभतुंगस्य सदृशं शिखरोदयम्  १
अर्धोत्सेधांशमानं वा तुंगं वै शिखरस्य तु
यदि विस्तारतुल्यं वा शिखरे प्लोतनीप्रकम्  २
वलभी वाजननीप्रं दण्डं वार्धं एव वा
द्विदण्डं नीप्रं चालंबनं समम्  ३
तन्नीप्रसदृशं तुंगं कपोतं वलभीजनात्
शिरस्तारं कपोतोर्ध्वं वलभीवाजनैः समम्  ४

शिखरे मध्यविस्तारं कंपनिष्क्रान्तसदृशम्
समं त्रिपादमर्धं वा तारमेवं चतुर्विधम्  ५
तत्र तारं च पञ्चांशे त्र्यंशं फलिकविस्तृतम्
शिखरे बलिकस्थानं भूतांशेषु शिरोदयम्  ६
वेदभागावसाने तु फलिकामराडलाकृतिं
त्रिचतुष्पञ्चमात्रं वा बलिकं मराडलं तथा  ७
तत्तारे तु चतुर्थांशन्तन्मराडलघनं भवेत्
युग्मं वाऽयुग्मसंख्यं वा परितः कल्पयेत्समम्  ८
बलिकानामधश्चोर्ध्वे वेत्रे तदधमानतः
बलिकव्यासभूतांशे युग्मांशं पद्मविस्तृतम्  ९
शिखरस्य तु मानान्तं पद्मतुंगमुदाहृतम्
पद्मतारत्रिभागैकं कुंभस्थाधोवलग्नकम्  १०
वलग्नस्य त्रिभागैकं कुंभस्योपरिकन्धरं
कन्धरं त्रिगुणं वाली तत्त्रिभागे तु कुड्मलम्  ११
पालिनाळविशालं तु कन्धरादिषु ब्रंहितम्
वलिकान्तं शिरोमध्यात् श्रानुपूर्व्यं कृशं कुरु  १२
मध्याद्वाजनतुल्यान्तं क्रमेण कृशतां कुरु
तस्मात्कपोतनीप्रान्तं क्रमेणैव बृहद्घनम्  १३
शिखरस्य तु तुंगार्धं पद्मार्धे स्तूपितुंगकम्
द्वाविंशति भवेदुच्चं पद्ममध्यर्धभागकम्  १४
कंपमर्धांशमित्युक्तं गलमर्धांशमानतः
तत्समं चोर्ध्वकंपं तु पद्ममंशेन कल्पयेत्  १५
भूतभागं गळोत्सेधं कंपमर्धांशमानतः
पद्ममंशेन कर्तव्यं कंपमर्धांशमानतः  १६
पञ्चांशं वालिकानां तु द्व्यंशं कंपमथोच्यते

पद्ममंशेन कर्तव्यं पालिकोच्चं तु भागकम् १७
अर्धेन पद्ममर्धेन पद्मशेषं तु कुड्मलम्
शिखराकृतिवत्कुंभं फलिकाकूश्मलं तथा १७
नागरे चतुरश्रं तत् वस्वश्रं द्राविडे शिरः
वृत्तं वेसरहर्म्ये तु शिरसो वर्तनं क्रमात् १८
नानापत्रलताभिस्तु शिखरं तु सुभूषयेत्
लक्षणं शिखरस्यैवं नासिकालक्षणं शृणु

इति काश्यपशिल्पे शिखरलक्षणं नाम विंशः पटलः

## अथैकविंशः पटलः

## नासिकालक्षणम्

अथ वक्ष्ये विशेषेण नासिकालक्षणं परम्
ललाटनासिकाख्यातं शिखरे तारसदृशम् १
शिखरस्य तु विस्तारं त्रिचतुष्पञ्चभागकं
क्रमान्नासाविशालांशमुत्तमाधममध्यया २
महानासी तु विख्याता त्रिविधासाप्रकीर्तिता
समं त्रिपादमर्धं वा शिखरे नासिनीप्रकम् ३
तत्तारत्रिचतुर्थांशहीनं शेषोदयं भवेत्
नासिकातुंगमाख्यातं तत्वर्धोच्चमथापि वा ४
शक्तिध्वजतदूर्ध्वेन असितुंगार्ध एव वा
त्रिपादं वा त्रिभागैकं भागं वाथ तदुन्नतम् ५
तच्छक्तिध्वजतुंगं तु गुणभागविभाजिते
द्विभागं किन्नरीवृत्तं तच्छेषं गळमानकम् ६
दण्डं तद्गलसारं स्यात् द्विगुणं किन्नरीमुखम्
शक्तिध्वजोपरिष्ठं तु पत्रं वाथ ससूकलम् ७

किन्नरी वक्त्रतुंगं स्यात्समं शूलोदयं भवेत्
पत्रं चोक्तेन मानेन तथा सौन्दर्यमाचरेत् ८
विस्तारं मुखपट्टयस्तु दराडं वाप्यर्धं एव वा
वल्ली मराडलछत्राद्यैः भूषयेन्मुखपट्टिकाम् ९
मुखपट्टयवशेषान्तं तद्वा गाढमुदाहृतम्
शतस्थिततपट्टीभ्यां त्रिनाल्यप्रतिभूषितम् १०
शूलाभं वा स्थलाभं वा सव्यालं वा सनाटकम्
मालिका कूटकोष्ठादिमरिडतं वा विमानयेत् ११
चित्रचित्राख्यमकरैः तोरणाख्यैरथापि वा
तोरणाभ्यन्तरे लक्ष्मीः साभिषेकांबुनासिका १२
नानाविधैस्तथान्यैर्वा नासिकार्थं तु मराडयेत्
सभद्रं तु महानासि पादं सर्वांगसंयुतम् १३
उत्तरं वाजनाब्जं च क्षेपणं नासिका तथा
कल्पयित्वा विशेषेण कराठं तारादिमानतः १४
ऊर्ध्वस्तंभविशालं वा विशालं वार्ध एव वा
नासिकास्तंभविस्तारं कर्णोच्चं तु तदुन्नतम् १५
स्वस्वश्रं वाथ वृत्तं वा युगाश्रं वा तदा कृति
नासिकायास्तु विस्तारं द्विदराडं वा त्रिदराडकम् १६
हितं शेषविशालं स्यात् नास्यंघ्रिबाह्यसीमकम्
नासिकांघ्रिद्वये मध्ये तन्मूर्तिस्थापनं कुरु १७
महानासमिदं प्रोक्तं क्षुद्रनासविधिं शृणु
सार्धदराडं द्विदराडं वा त्रिदराडं वाथ विस्तृतम् १८
तत्तारत्रिचतुर्थांशहीनं शेषोदयं भवेत्
कपोतालंबनात् क्षुद्रनागोच्चं तु प्रकल्पयेत् १९
प्रतिवाजनसीमान्तं तस्य शक्तिध्वजोन्नतम्

तदुच्चं तु त्रिधाभज्य एकांशं कराठमानकम्  २०
शेषं किन्नरिवक्त्रं वै तारं युक्तिवशान्नये
नासितारार्धगाढं स्यात् गाढार्धं मुखपट्टिका  २१
व्यासं तालादिभिर्भूष्य नानालंकारसंयुतम्
पादं वृतिकपो तेषु कल्पयेत्स्वस्तिका कृतिम्  २२
मध्ये च कूटशालानां पञ्जरं चाल्पनासिकम्
कल्पयेत्तु विशेषेण शिखरे भद्रनासिकम्  २३
शालाग्रयोस्तु कर्तव्या ललाटाख्या तु नासिका
नासिकालक्षणं प्रोक्तं ततः प्रासादमानकम्  २४

इति काश्यपशिल्पे नासिकालक्षणं नाम एकविंशः पटलः

## अथ द्वाविंशः पटलः

### प्रासादमानम्

अथ वक्ष्ये विशेषेण प्रासादमानलक्षणम्
प्रासादः सदनं सद्महर्म्यं धामनिकेतनम्  १
मन्दिरं भवनं वासः गेहं दिव्यविमानकम्
आश्रयं चास्पदं चैव अधारं च क्रमेण तु  २
आधारप्रतिधिष्ण्यं च हर्म्यपर्यायवाचकाः
तस्मादत्र परो नास्ति परिमाणं समुच्यते  ३
यवाष्टौ सधरेण स्यात् धरे वेष्टकपिंपि च
पिशुनामष्टकं प्रोक्तं केशानाग्रं तु संज्ञिका  ४
बालानां मूर्ध्निकेशः स्यादग्रं तस्योपमानकम्
तत्केशाग्रं च सायं यत् लक्ष्यमाणमुदाहृतम्  ५
सप्तसंख्ययवं तारं मध्यमं गुलमुच्यते
कराग्राग्रान्तमाख्यातं षट्संख्यं यवविस्तृतम्  ६

शाल्यायामचतुष्कं तु उत्तमांगुलिसंज्ञिकम्
शाल्याय त्रिगुणं मानमधमं तदुदाहृतम् ७
श्वेतशाली महाशाली रक्तशाली तथैव च
सौगन्धी हेमशाली च शाली पञ्चविधा स्मृता ८
रक्तशाल्यायतं तेषु अंगुलार्थं तु संग्रहेत्
एवं तु षड्विधं प्रोक्तं मानांगुलं द्विजोत्तम ९
चंद्रजीवशिवांशं च व्योमचैकांगुलाख्यकम्
वृक्षपक्षाश्विनी चैव द्वितीयांगुलसंज्ञिकम् १०
कालं चानलरुद्राक्षशूलं चालेखिनं गुणम्
तृतीयं गुणसंज्ञाकं चेदाब्धियुगकोलकम् ११
चतुरंगुलसंज्ञास्तु बाणभूतेंद्रियास्तृतम्
पञ्चांगुलस्य संज्ञास्तु कुमारस्समयस्तथा १२
सारं चारमकं चैवर्तुकौशिकं षडंगुलम्
पातालं ऋषिधातूद्वांभोध्युष्णिक् नगास्तथा १३
मातृलोकं स्मरं चैव सप्तांगुलविधानतः
हस्तिपर्वत अनुष्टु च मानं च वसवो मूर्तयस्तथा १४
अष्टांगुलस्य संज्ञाः स्युः शक्तिद्वारगृहस्य वा
सूत्रानन्तघनं ताद्यं द्विजाश्चैव नवांगुला १५
नाडिकाष्ठायुतं धर्मं दशांगुलस्य संज्ञकम्
कंशातं चैवरो रुद्रमेकादशांगुलाख्यया १६
अब्दं भास्करभानुश्च द्वादशांगुलसंज्ञितम्
चंद्रादित्यशिवांशं च त्रयोदशांगुलं स्मृतम् १७
पक्षश्च तिथयश्चैव पञ्चदशांगुलं स्मृतम्
कलामूर्तिद्वयं चैव षोडशांगुलसंज्ञितम् १८
पञ्चविंशतिः त्रिंशच्च चत्वारिंशत्तथैव च

पञ्चाशत् षष्टिसप्तत्यः अशीतिर्नवतिश्शतम् १९
प्रत्ययस्त्रिषु पञ्चाशत् जगतीसु गतिस्तथा
सत्वरिः च सशकश्च तुष्टिः पुष्टिः धृतिस्तथा २०
सुध्रितश्च दशाद्यादि शतानामभिधानकम्
एकादशं शतं चैव सहस्रमयुतं तथा २१
नियुतं प्रयुतं कोटिरर्बुदं ब्रूत खर्वटम्
निखर्वं शंखं पद्मं च समुद्रं मध्यमन्तरम् २२
आद्यं परं परार्धं च दशवृद्ध्या प्रकीर्तिताः
श्रेष्ठं मात्रान्तरैः स्तंभद्वादशांगुलं भवेत् २३
भानुद्वयांगुलं कृष्णं हस्तमित्युच्यते बुधैः
श्रेष्ठमध्यान्तरैः मात्रैः कल्प्यहस्तं तथोदितम् २४
तच्चतुष्कं भवेत् दण्डं तेन वस्त्राणि मापयेत्
पञ्चविंशतिमात्रं स्यात् प्राजापत्यं करं बुध २५
षड्विंशतिर्धनुर्मुष्टिः सप्तविंशत् धनुर्ग्रहम्
अष्टाविंशांगुलं प्राच्यं वैदेहं नवविंशतिः २६
वैर्वल्यात्रिंशदंगुल्यमेकत्रिंशत् प्रकीर्णकम्
एवमष्टविधं हस्तं प्रत्येकं द्विजसत्तम २७
अधमं मध्यमोत्कृष्टं भेदेनैव रविद्वयम्
धनुग्रहं प्रकीर्णाढ्यं द्विजानां गृहमारभेत् २८
वैपुल्यधनुर्मुष्टिभ्यां क्षत्रियाणां गृहं कुरु
प्राजापत्य करेणैव शूद्रजातिगृहं भवेत् २९
अधिकं जात्यकं हस्तं हीनानां तु विवर्जयेत्
सीनाधिकारविप्राणामधिकं च शुभावहम् ३०
सर्वेषामुदितं हस्तमेवं सद्मनिपूजितम्
अन्यच्च सर्वदेवानां योग्यं सद्मनियोजयेत् ३१

अधिकं कृष्णहस्तं तु सर्वजात्यर्हकं भवेत्
मानादिशयनान्तं च कृष्णहस्तेन मापयेत् ३२
आरामोद्यानकादीनि प्राजापत्यकरेण तु
धनुर्मुष्टिकया चैव ग्रामादिवास्तु मापयेत् ३३
धनुर्ग्रहेण वाप्यादि नद्यवानं च मापयेत्
अथवा कृष्णहस्तेन सर्ववास्तूनि वा द्विज ३४
इति काश्यपशिल्पे प्रासादादिमानलक्षणं नाम द्वाविंशः पटलः

## अथ त्रयोविंशः पटलः
### मानसूत्रादयः

अथ वक्ष्ये विशेषेण मानसूत्रस्य लक्षणम्
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् १
नवपङ्क्तिकरान्तं तु हस्तेनार्ककरं भवेत्
एवमष्टाविधं मानं युग्मायुग्मं चतुश्चतुः २
पञ्चषट् हस्तमारभ्य द्विद्विहस्तविवर्धनात्
तिथिद्विरष्टकरान्तमाभासं त्रितलस्य तु ३
गृह्यधर्मकराद्यावत् सप्ताष्टाधिकतः कराः
चतुष्पञ्चतलं वाथ युग्मायुग्मं च ते दश ४
विस्तारं सप्तषट्पञ्चभागं कृत्वा द्विजोत्तम
रसभूतयुगांशं तु विस्ताराद्रोपयेत्क्रमात् ५
विस्तारे द्विगुणं चैव तस्मादष्टांशमाधिकम्
पञ्चायाथर्दितं तुंगमाभासे सदने द्विज ६
शान्तिकं पौष्टिकं चैव जयदं चाद्भुतं तथा
सार्वकामिकमित्येते अभिधानं यथाक्रमम् ७
हस्तद्वैधप्रवृद्ध्याथ व्यासत्संपूर्णमाचरेत्

आभासहर्म्यमाख्यातं विकल्पमधुना शृणु ८
नवपङ्क्तिकरात्पञ्चषट्पञ्चाशत्करांशकम्
द्विद्विहस्तविवृद्ध्या तु चतुर्विंशति संख्यया ९
पञ्चभूमिं समारभ्य यावदर्कतलान्तकम्
अधमं मध्यमोत्कृष्टं विकल्पं च यथाक्रमम् १०
षट् त्रिंशद्धस्तविस्तारे सप्तपञ्चाशदुच्छ्रये
त्रयोदशतलं कुर्यात् मम प्रीतिकरं भवेत् ११
विस्तारे सप्तपञ्चांशं नवभिर्हस्तमञ्चकं
तलं षोडशभिर्युक्तं शिवहर्म्यं शिवप्रियम् १२
एवं विकल्पमाख्यातं छन्दमार्गमथ शृणु
त्रिचतुर्दशहस्तादि द्विद्विहस्तविवर्धनात् १३
पञ्चषट् षष्टिहस्तान्तं व्यासे वै सप्तविंशतिः
वेदभूमिं समारभ्य भानुभूम्यवसानकम् १४
अधमं मध्यमोत्कृष्टं मानं वेदतलं प्रति
सप्ताष्टादशहस्तादि त्रित्रिहस्तविवर्धनात् १५
पञ्चषण्णवतिर्यावत् उच्चं प्रागिव संख्यया
अधमं मध्यमोत्कृष्टं तुंगभेदतलं प्रति १६
छन्दमेवं तलाख्यातं जातिहर्म्यमथ शृणु
सप्ताष्टादशहस्तादि द्विद्विहस्तविवर्धनात् १७
सप्ताशीति हस्तान्तं सप्तविंशति संख्यया
चतुर्भूमिसमारभ्य यावदर्कतलं प्रति १८
तावद्विस्तारमाख्यातमुत्सेधं शृणु सांप्रतम्
त्रिसप्तविंशद्धस्तादि त्रित्रिहस्तविवर्धनात् १९
यावदाशतहस्तान्तमुच्चं प्रागिव संख्यया
अधमं मध्यमोत्कृष्टं व्यासोच्चं च क्रमोदितम् २०

एवं जातिविमानं तु सप्तविंशति धोदितम्
जातिच्छन्दविकल्पं च आभासास्ते द्विजोत्तम २१
महती द्व्यन्तराल्पं च क्षुद्रनासाप्रचोदितम्
युगाग्रे भूतमाने तु मानसूत्रं च विन्यसेत् २२
तदन्या कृतिहर्म्याणां वेदं शृङ्गाग्रपूरणम्
यत्रैव भज्यते तत्र मानसूत्रं विधीयते २३
प्रासादानां तु विस्तारं भित्तिपाद्बाह्यमेव वा
तद्पादाभ्यन्तरं वाथ तत्पादमध्यमं तु वा २४
उत्सेधं तदुपानादिस्तूप्यन्तं वा शिरोन्नतम्
सभामण्डपशालानां भित्तिमध्यावसानकम् २५
भित्तिमध्येंघ्रिबाह्ये वा मध्ये वाप्यन्तरेपि वा
भित्तिबाह्य गतं सौ तु बाह्ये वाभ्यन्तरेपि वा २६
तदङ्घ्रिमध्यावसानं मानसूत्रं द्विजोत्तम
भित्तिमध्येङ्घ्रिविस्तारं चाङ्घ्रिस्थानेषु चोच्यते २७
भित्तिबाह्यगतं पादं प्रागेव प्रोच्यते तदा
सालानां भित्तिमध्ये वा बाह्ये वाभ्यन्तरेऽपि वा २८
यानानां शयनानां च स्यान्मध्ये मानसूत्रकम्
मानसूत्रं समाख्यातं सर्वेषां सदनादिनाम् २९
मानसूत्रं तु बाह्ये स्यात् कूटशालादि नीप्रकम्
कूटाद्यात्तविशालं वा त्रिपादं वार्धमेव वा ३०
पादं सार्धं सपादं वा मानसूत्राच्च निर्गतम्
अथवा दण्डमानेन तुंगादीनां तु निर्गतं ३१
दण्डं वा ह्यर्धदण्डं वा द्विदण्डं सार्धदण्डकम्
त्रिदण्डं वाथ निष्क्रान्तं मानसूत्रात्तु बाह्यतः ३२
मानस्याभ्यन्तरे वेशं विपदामास्पदं सदा

तस्मात्सर्वप्रयत्नेन मानसूत्राद्बहिर्गतम्  ३३
एतद्विन्यासपूत्रं स्यात् समसूत्रात्समं तु वा
होमवाग्गतसूत्रं वा अवसानमुदाहृतम्  ३४
मानविन्याससूत्रं च अवसानं च ते त्रयम्
ख्यातं संक्षेपतो विप्र शृणुष्वाऽऽयादिलक्षणम्  ३५
इति काश्यपशिल्पे मानसूत्रादिलक्षणं नाम त्रयोविंशः पटलः

अथ चतुर्विंशः पटलः

आयादिलक्षणम्

अथ वक्ष्ये विशेषेण आयादिलक्षणं परम्
हर्म्यषड्भागमानं तु गुणाढ्यं वसुभिर्हरेत्  १
शेषं द्विजादियोनिः स्यात्तमसेधकरं बुधः
वर्जयेद्वसुभिश्चैव ऋक्षे भूतं हयादिकम्  २
नवधा परितो हस्तं पातालैर्ह्रासयेद्बुधः
शेषमर्कादिवारं स्यात् व्यासायामकरं गुणैः  ३
त्रिंशद्भिर्वर्जयेत् भित्तिं शेषं प्रतिपदादयः
तिथयस्तु समाख्याताः तुंगं हस्ताष्टवृद्धितम्  ४
नाडिस्तु निविशेषमायमित्युच्यते बुधैः
तुंगं नवं तु मध्यात्तु क्रमाद्वै नाडिभिर्हरेत्  ५
शेषं व्ययमिति ख्यातमायाधिक्यं व्ययक्षयम्
केतुस्सिंहो वृषो हस्ती गुरुश्शुक्रो बुधः शशी  ६
यजमानस्य जन्मर्क्षादविरोधे दिनं तथा
वास्तुजन्मविरोधं च तथा ह्यात्मकुलं शुभं  ७
एवं परीक्ष्य बहुधा शुभमानं तु संग्रहेत्
अथवा विस्तृतायामहस्तमष्टगुणी कृते  ८

भानुव्यये विशेषं तु आयमित्युच्यते बुधैः
नवद्वादशिभिर्ह्रासे शेषं व्ययमुदाहृतम् ९
वसुभिर्गुणिते ऋक्षे हृते शेषादिकं दिनम्
गुणवृद्ध्याऽष्टभिर्ह्रासे शेषं ध्वजादियोनयः १०
नव ऋद्ध्या परीतोस्तं सप्तसंख्या तु ह्रासयेत्
शेषमर्कादिवारं स्यात्त्रिंशत् ह्रासे तिथिर्भवेत् ११
प्राग्वत् शुभाशुभं वक्ष्ये शुभमानं तु संग्रहेत्
त्रिपञ्चयुगलं वेद षडष्टनवभानि वै १२
सदेष्टसिद्धिदाः प्रोक्ताः शेषास्स्युः परिवर्जिताः
नृपकर्तुश्च जन्मर्क्षाद्विह ऋक्षावसानकम् १३
गणयेन्मतिमान्विप्रः शुभाशुभं तु गृह्यताम्
लग्नाष्टमं विनाशं च दुष्टयोगं च वर्जयेत् १४
शूलादियोगदोषाढ्ये दुष्टयोग उदाहृतः
आयादिरेवमाख्यातं नागरादिविधिं शृणु १५

इति काश्यपशिल्पे आयादिलक्षणं नाम चतुर्विंशः पटलः

## अथ पञ्चविंशः पटलः

## नागरादिविमानलक्षणम्

नागरादिविमानानां लक्षणं वक्ष्यतेऽधुना
हिमाद्रिकन्ययोरन्तर्गतो देश उदाहृतः १
सोपि देशस्त्रिधा भिन्नः तत्तद्देशोद्भवैर्गुणैः
यथैव देहिनां देहः वातपित्तकफात्मकः २
तथा ह्येतज्जगत्सर्वं विज्ञयं त्रिगुणात्मकम्
सात्विकं तामसं चैव राजसं च त्रिधा स्मृतम् ३
हिमाद्रिविन्ध्ययोरन्तर्गता सत्वा वसुन्धरा

विन्ध्यादिकृष्णवेरायन्ताराजसाख्यामहीमता ४
कृष्णवेरयादिकन्यान्तं तामसं भूतलं भवेत्
नागरं सात्विके देशे तामसे वेसरं भवेत् ५
राजसे द्राविडं देशे कामदेवं हि भावयेत्
सात्विके नागरं हर्म्यं तामसे वेसरालयम् ६
राजसैर्द्राविडैर्हर्म्यं क्रमात्पुराडरियोषितः
विष्णुर्महेश्वरो धाता क्रमाद्धर्म्यादि देवताः ७
नागरं भूसुरं विद्यात् वेसरं वैश्यमुच्यते
द्राविडं तन्नृपं ज्ञेयं मात्रती शृणु सुव्रत ८
कूटकोष्ठादि निष्क्रान्तं मानसूत्रे तु सुस्थितम्
उन्नतावनतोपेतौ कूटकोष्ठौ यथाक्रमम् ९
एकाकारतलस्तंभपत्रतोरणसंयुतम्
क्षुद्रकोष्ठसमायुक्तं महानास्य परे द्विज १०
वेदिकाजालकोपेतं कूटवेदाश्रशीर्षकम्
एकानेकतलं वापि सालिंद्रं वापि हीनकम् ११
वेदाश्रं शीर्षं करठं स्यात् सालाकारमथापि वा
नागरं भवनं ख्यातं तत्तद्देशे प्रकल्पितम् १२
प्राग्वत्कूटविनिष्क्रान्तं कूटकोष्ठोद्गतं तु वा
मानसूत्राद्बहिः कूटं नीप्रकूटं तु कोष्ठकम् १३
मध्यकोष्ठं सभद्रं वा द्विभद्रं वा द्विजोत्तम
पञ्जरं मानसूत्रेण कूटनिष्क्रान्तसागरम् १४
उन्नता वनता वेला सौष्ठीकोपि यथाक्रमम्
उन्नतं सान्तरं मञ्चं तं तं प्रस्तरहीनकम् १५
चतुरश्राष्टवृत्तान्तं कूटं क्रमात्तले तले
नानामसूरकस्तंभवेदिकालकतोरणैः १६

वृत्ताख्यस्फाटितैर्हस्तितुगडैः कुंभलतादिभिः
हारान्तरेषु स्तंभोर्ध्वे क्षुद्रकोष्ठयुतं तु वा १७
तत्रैव हस्तितुगडं वा भद्रनास्यल्पमेव वा
साधारं वा निराधारमेकानेकतलं तु वा १८
शिरसो वर्तनं कगठं वृत्तं वाष्टाश्रमेव वा
युगाश्रं वा शिरोग्रीवं विमानं द्राविडं भवेत् १९
तदेव चरगाधारमेकाकारं तु कल्पयेत्
हारान्तरे विशेषेण कल्पवृत्तस्फुटोदयम् २०
समं तु कूटकोष्ठौ द्वौ सान्तरप्रस्तरान्वितौ
हीना वान्तरमन्तोर्ध्वे निष्पञ्चसमसूत्रकम् २१
हारान्तरे तु कर्तव्यं भद्रं वा भद्रपञ्जरम्
कपोतपञ्जराढ्यं वा सान्तरप्रस्तरान्वितम् २२
सर्वेषां कगठकूटानामाशीर्षं तु युगाश्रकम्
वस्वश्रं वेदिकोपेतं मगडलं शीर्षकं गलम् २३
वस्वश्रं वा शिरः कगठं युगाश्रं वा प्रकल्पयेत्
एतच्च द्राविडं ख्यातं होमाद्याकुड्मलान्तकम् २४
वस्वश्रं वा षडश्रं वा तच्च द्राविडमुच्यते
एवं त्रिविधं नित्यं तु प्रोच्यते द्राविडालये २५
वेसरे कूटकोष्ठादि नीप्राः स्युः समसूत्रिणः
वृत्ताकारशिरोपेतान् कगठकूटान् प्रकल्पयेत् २६
वृत्तं गर्भगृहाकारं बाह्यं वृत्ताभमेव वा
वृत्तग्रीवशिरोपेतं यथेष्टं शिखरेण वा २७
सालिंद्रं वा सभद्रं वाऽप्येकानेकतलं तु वा
समाग्रं वाऽऽयताग्रं वा वृत्तं वृत्तायतं तु वा २८
द्व्यश्रं वृत्तायतं हर्म्यं कूटकोष्ठादिभिर्युतम्

उन्नतावनपेतौ कूटकोष्ठौ यथाक्रमम्  २९
समौ वा कूटकोष्ठौ द्वौ बाहू भूम्येकमेव वा
वेसरं भवनं ख्यातमथवान्यप्रकारतः  ३०
जन्मादिस्तूपिपर्यन्तं युगाश्रं नागरं भवेत्
वस्वश्रं शीर्षं कराठं वा द्राविडं भवनं भवेत्  ३१
वृत्तग्रीवशिरोपेतं वेसरं हर्म्यमीरितम्
कूटकोष्ठविहीनानां हर्म्यकं कथितं त्विदम्  ३२
नानाधिष्ठानसंयुक्तं गलं प्रत्यंघ्रिभेदितम्
सर्वत्र वृत्तपादं वा वेसरे भवने कुरु  ३३
लिंगं च पिरिडकां चैव प्रासादं चैव जातिकम्
सर्वसंपत्समृद्धिः स्यात् नृपतेर्वास्तुजन्मनाम्  ३४
परी ते विपरीते वा राजराष्ट्रभयंकरम्
तस्मात्सर्वप्रयत्नेन एकजात्यैवमाचरेत्  ३५
नागरे सकलं शान्तं वेसरे यानपत्तिनां
भोगं वीरं च नृत्तं च द्राविडे भवने भवेत्  ३६
अन्यथा चेद्विपत्यै च कर्तुर्भर्तुश्च देहिनाम्
नागरादिविधिः प्रोक्तः गर्भन्यासविधिं शृणु  ३७
इति काश्यपशिल्पे नागरादिविमानविधिर्नाम पञ्चविंशः पटलः

अथ षड्विंशः पटलः
गर्भन्यासः

अथ वक्ष्ये विशेषेण गर्भन्यासविधिं परम्
प्रासादं देहमित्युक्तं तस्य प्रकारो वास्तुगर्भकम्  १
गुरुहीने गृहे विप्र सकृत्कालं नवास्यकम्
अहमन्ये च देवाश्च नवसेयुरगर्भकम्  २

तस्मात्सर्वप्रयत्नेन गर्भन्यासं तु कारयेत्
श्रीप्रणं भाणिनां गर्भमितरे श्रीकरं भवेत् ३
अधिष्ठानव्रतेरूर्ध्वे भूसुराणां हिताय वै
कुमुदोर्ध्वे नृपाणां तु जगत्यूर्ध्वे विशां वरम् ४
होमोर्ध्वे गर्भविन्यासं शूद्राणामभिवृद्धिदम्
सर्वजात्यन्तं हं प्रोक्तं भूमौ त्वाद्येष्टकोपरि ५
प्रासादे मण्डपे चैव प्राग्द्वारे गोपुरे तथा
परिवारालये चैव गर्भन्यासं तु कारयेत् ६
यत्रैवाद्येष्टकान्यासः तत्र गर्भं निधापयेत्
सौवर्णं राजतं ताम्रं श्रेष्ठमध्याधमं क्रमात् ७
कांस्येनैवाथवा विप्र कर्तव्यं गर्भभाजनम्
पञ्चांगुलं समारभ्य यावद्वै विंशदंगुलम् ८
एकैकांगुलवृद्ध्या तु कलासंख्या तु भाजनम्
एकादिषोडशान्तानां भूमीनां तु यथा क्रमम् ९
गर्भभाजनतारास्ते त्वंघ्रिमूलतरं तु वा
गर्भभाजनविस्तारं विस्तारसदृशोन्नतम् १०
भाजनोच्चस्य भागैकं पिधानस्योच्छ्रयं भवेत्
भाजने द्वित्रिभागान्तं पिधानालंबनं द्विज ११
यवैकव्यासमारभ्य यवार्धैः कोष्ठविस्तृतम्
फलोच्चं त्रिचतुर्भागं कोष्ठभित्त्युदयं भवेत् १२
मध्यकोष्ठे न्यसेन् कूटमिंद्रनाभसमन्वितम्
तत्पूर्वं ह्यष्टकोष्ठेषु परितो द्विजसत्तम १३
अनन्तादिशिखण्ड्यन्तं मूलमन्त्रं निधापयेत्
तद्बाह्ये षोडशे कोष्ठं पूर्वादिक्रमयोगतः १४
अकारादिविसर्गान्तस्वरान्न्यासेत् यथा क्रमम्

रत्नलोभा निधान्यानि फलान्यवरके न्यसेत् १५
मृत्कन्दधान्यपत्राणि गर्भगर्ते तु विन्यसेत्
फलशुद्धिं ततः कृत्वा गव्यदस्त्रेत्युदाहरन् १६
माणिक्यं विन्यसेत् कूटे कूटमन्त्रमुदाहरन्
अनन्ते विन्यसेत् वज्रं सूक्ष्मे मौक्तिकं न्यसेत् १७
शिलोत्तमैरिन्द्रनीलं स्यात्स्फाटिक्यैकनेत्रकम्
एकरुद्रे तु शंखं स्यात् त्रिमूर्ते पुष्परागकम् १८
श्रीकण्ठसूर्यकान्तं स्यात् शिखण्डे तु विडूरकम्
स्वर्णेनैव जगत्कृत्वा अकारे विन्यसेत् बुधः १९
कपालं रजतेनैव इकारे तु निधापयेत्
तन्त्रेणैव तु तंकुंभमुकारे द्विजसत्तम २०
आरकूटेन तद्द्वारं ऋकारे तु निधापयेत्
कांस्येनैव पिनाकं तु औकारे विन्यसेद्बुधः २१
सीसेन पाशुं कृत्वा णकारे तु निधापयेत्
त्रपुणा हरिणं कृत्वा ओकारे तु निधापयेत् २२
त्रिशूलमायसेनैव अंकारे तु निधापयेत्
स्वर्णेन वृषभं कृत्वा कूटाक्षरे निधापयेत् २३
आकारे विन्यसेत् शम्यामीकारे तु मनश्शिलाम्
उकारे जातिलिंगं तु ऋकारे गैरिकान्नयसेत् २४
सौराष्ट्र चैव लृकारे एकारे त्वञ्जनां न्यसेत्
गोरोचनं तथांकारे विसर्ज्ये नीलधारकम् २५
तद्बीजं समनुस्मृत्य विन्यसेत्तत्क्रमेण तु
यवानी वारशाली च प्रियंगुतिलसर्षपम् २६
मुद्गानि सप्त बीजानि पूरयेत् गर्भभाजने
पिधाय च विधानेन सुस्निग्धं सुदृढं कुरु २७

प्रासादस्योत्तरे चाग्रे पञ्चषट्सप्त हस्तकाम्
षोडशस्तंभसंयुक्तां प्रपां कृत्वातिसुन्दराम्  २८
विधानेनोर्ध्वमाच्छाद्य करंगैः स्तंभवेष्टनैः
द्वारतोरणसंयुक्तं दर्भमालादिभूषितम्  २९
मण्डपस्य त्रिभागैकं मध्ये वेदिं प्रकल्पयेत्
हस्तमात्रविमुत्सेधं तालमात्रमथापि वा  ३०
परितस्त्वग्निकुण्डानि महाशालं द्विजोत्तम
चतुरश्रं धनुर्वृत्तं पद्मं प्रागादिषु क्रमात्  ३१
त्रिमेखलसमायुक्तं नाभियोनिसमन्वितम्
दर्पणोदरसंकाशं कुण्डवेदिस्थलं कुरु  ३२
तत् शिल्पिवतमुद्वास्य गोमयालेपनं कुरु
पिष्टचूर्णैरलंकृत्य पुण्याहं प्रोक्षणं कुरु  ३३
वेदी द्वे स्थण्डिले कुर्यात् चतुर्द्रोणैस्तु शालिभिः
तिलतण्डुललाजैश्च दर्भैः पुष्पैः परिस्तरेत्  ३४
गन्धपुष्पादिभिः पूज्य दिग्देवान् नाममन्त्रकैः
गव्याभिषेच्य फलं तु स्नापयेत् गन्धतोयकैः  ३५
तंतुनाकौतुकं बध्वा नववस्त्रेण वेष्टयेत्
स्थण्डिले तु निधातव्यं कूटाक्षरमुदाहरन्  ३६
परितोष्टौ घटान्नयस्य ससूत्रान्सपिधानकान्
सकूर्चान् वस्त्रसंछन्नान् सगन्धान्परितः क्रमात्  ३७
विश्वेश्वरादिकुंभस्थे स्तोत्राभ्यर्च्य स्वमन्त्रतः
कुण्डानां पञ्चसंस्कारं कृत्वा होमं समाचरेत्  ३८
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
समिदाज्य चरून् लाजान् तिलतण्डुलसर्षपान्  ३९
हृदयादिषु संघैश्च ईशानेन क्रमेण तु

होमं कृत्वा विशेषेण प्रत्येकाष्टशताहुतीः ४०
द्रव्यान्ते व्याहृतीर्हुत्वा मूलेनैव शताहुतीः
जयादिरभ्यातानैश्च राष्ट्रभृच्चैव होमयेत् ४१
एवं जागरणं रात्रौ प्रभाते सुमुहूर्तके
सुनक्षत्रे सुलग्ने तु सुतिथौ च सुवासरे ४२
शिवद्विजकुले जातः स्वाचार्यः शिवदीक्षितः
स्नानद्वयसमायुक्तः सकलत्रः सविग्रहः ४३
सितवस्त्रोत्तरीयश्च सितमाल्यानुलेपनः
आचार्यान्पूजयेत्तत्र वस्त्रहोमांगुलीयकैः ४४
शिल्पिनः पूजयत्तत्र वस्त्रैराभरणादिभिः
गर्भस्थानं प्रविश्याथ कर्त्रा चाचार्यशिल्पिनौ ४५
अष्टधा विभजेत् भित्तिं बाह्यतश्चतुरस्त्यजेत्
त्रीणि चाभ्यन्तरे वर्ज्य शेषांशे भाजनं न्यसेत् ४६
हृन्नदी सस्यवल्मीक हलस्तेङ्गुलिरातटे
नागा वृषभशृंगे च अष्टमृत् गृह्यदेशिकः ४७
गर्भगर्तेनमोच्चार्य कन्दान्नयसेत्ततोपरि
मध्यमे त्वंबुजं न्यस्यात्पूर्वे कुमुदकन्दकम् ४८
दक्षिणे चोत्पलं कन्दं सौगन्धिं पश्चिमे न्यसेत्
सौम्ये उशीरकन्दं स्यात् बीजं तदुपरि न्यसेत् ४९
पूर्वे तु विन्यसेत्सालिं व्रीहिं वै दक्षिणे न्यसेत्
पश्चिमे कोद्रवं विद्यात् माषमुत्तरतो न्यसेत् ५०
पावते विन्यसेत् माषं नैर्ऋत्यां कुरु पूजकैः
प्रियंगुवायुदिग्भागे ऐशान्ये तु कुलुत्थकम् ५१
एवं न्यस्य हृदं मन्त्रांस्तथा वै गर्भभाजनम्
सर्ववाद्य समायुक्तं नृत्तगेयसमन्वितम् ५२

जयशब्दसमायुक्तं ब्रह्मघोषसमन्वितम्
प्रासादबीजमुच्चार्य स्थापयेत् गर्भभाजनम्  ५३
शिलाभिरिष्टकाभिर्वा सुधया सुदृढं कुरु
गन्धपुष्पादिभिः पूज्य प्रासादं कल्पयेत्ततः  ५४
गर्भन्यासविधिः ख्यातः ततस्त्वेकविधिं शृणु  ५५

इति काश्यपशिल्पे गर्भन्यासविधिर्नाम षड्विंशः पटलः

## अथ सप्तविंशः पटलः

## एकतलविधिः

अथ वक्ष्ये विशेषेण हर्म्यमेकतलं शृणु
तस्य विस्तारतुंभं च प्रोक्तं प्रासादमानके  १
युगाश्रं वृत्तमायाश्रं वस्वश्रं च षडश्रकम्
अष्टाश्रमाकृतिस्त्वेषां शिखरेऽपि तथैव च  २
हर्म्यताराधर्मानं तु कन्यसंमुखमण्डपम्
हर्म्यतारसमं श्रेष्ठं तयोर्मध्येऽष्टभाजिते  ३
मुखमण्डपदैर्घ्यं तु नवधा कथितं मया
प्रासादसदृशव्यासमुत्तमत्रयमण्डपम्  ४
प्रासादावेशनं श्लेषात् दण्डं वार्धार्धदण्डकम्
द्विदण्डं वा प्रवेशं तु मानसूत्रं द्विजोत्तम  ५
अन्तराळसमायुक्तं युक्तसर्वांगसंयुतम्
सावकाशान्तरालं च दीर्घं द्वित्रिचतुष्टयम्  ६
सोपानं पार्श्वयोः कुर्यात् गजहस्तविभूषितम्
प्रासादभित्तिविस्तारतुल्यं वार्धत्रिपादकं  ७
अन्तरालस्य भित्तेश्च व्यासाः स्युः मण्डपे तथा
कूटकोष्ठादि युक्तं वा हीनं वा मुखमण्डपम्  ८

त्रिवर्गसहितं वापि तोरणाद्यैर्विचित्रितम्
एकानेकतलं वाथ कर्तव्यं मुखमण्डपम् ९
हर्म्यतारेऽग्निभागैकं गर्भगेहस्य विस्तरम्
पञ्चभागेऽग्निभागं च वेदांशं सप्तभागिकम् १०
द्वारांशे भूतभागं च अर्कांशं रुद्रभागिके
त्रयोदशांशे वस्वंशं दशं वस्वंशभागिके ११
सपादं च नवांशं च व्यासोर्द्धं हि द्विजोत्तम
गर्भगेहस्य विस्तारः नवधा परिकीर्तितः १२
शेषं भित्तिविशालं स्यात् परितः कल्पयेत् बुधः
एकद्वित्रिचतुष्पञ्च पङ्क्तिः स्यादेकभागिके १३
हर्म्योच्चं वसुधा भज्य एकांशं हि तलोन्नतम्
द्विभागं चरणायामं प्रस्तरस्यैकभागता १४
गलोच्चं त्वेकभागेन द्विभागं शिखरोदयम्
एकांशं स्तूपितुङ्गं च कल्प्यैवं शान्तिकं भवेत् १५
एकांशरहितं शेषं पञ्चं वा पार्श्वदेवता
एवं शान्तिकमाख्यातं पौष्टिकं चाधुनोच्यते १६
सदनोच्चेनवांशे तु शिवांशं तु तलोदयम्
अर्धेनांशसमायुक्तं द्व्यांशं चरणायतम् १७
पञ्चमानं तथैवांशं सार्धं पादांशकं गलम्
सत्रिभागं द्विभागं तु शिखरोदयमीरितम् १८
स्तूप्युत्सेधं तथैकांशं पौष्टिकं सदनान्वितं
सदनोच्चे दशांशैकमधिष्ठानोदयं भवेत् १९
सार्धद्व्यंशं तु पादोच्चं प्रस्तरोच्चं शिवांशकम्
सार्धांशं गलमानं तु गुणांशं शिखरोदयम् २०
एकांशं स्तूपिमानं तु जपतानामुदाहृतम्

रुद्रांशं हर्म्यतुंगं तु सपादांशं धरातलम्  २१
सार्धद्व्यंशं तु पादोच्चं प्रस्तरोच्चं शतांशकम्
अत्यर्थांशं तु कण्ठोच्चं सार्धस्यांशं तु शीर्षकम्  २२
शेषं स्तूप्युदयं ख्यातं तद्भूतं सदनं भवेत्
उत्तुंगे सप्तभागे तु व्योमांशं तु धरातलम्  २३
पञ्चांशं पादतुंगं तु शिखरोच्चं गुणांशकम्
स्तूप्युत्सेधं तथैकांशमेतत्स्यात्सर्वकामिकम्  २४
शान्तिकाद्युदयोपेतं हर्म्यैर्गुण्यं क्रमोदयम्
विपरीते त्रिपादानां वैपरीत्यं समावहेत्  २५
तस्मात् भित्यादिगुण्यं च उदयं चैकमाचरेत्
रुद्रांशं सदनोत्सेधं तलमेकांशमानतः  २६
द्व्यंशं च चरणायामं प्रस्तरं च शिवांशकम्
उपग्रीवं तु सार्धांशं त्रिपादं प्रस्तरोदयम्  २७
सपादांशं गलोत्सेधं सार्धद्व्यंशं तु शीर्षकम्
एकांशं स्तूपिमानं तु एवं चैवाद्भुतं स्मृतम्  २८
अथवाष्टौ द्विरष्टौ च धात्वष्टाभूत्तथा कृतम्
पञ्चैराधारमानं च मञ्चोपग्रीवमञ्चकम्  २९
गळमूर्ध्नि शिखामानं पाद्ये चाष्टनवांशकम्
सोपग्रीवसमं चैतत् एकभूरेकविन्यसेत्  ३०
ऊर्ध्वं मञ्चोपरिष्टं तु चतुष्कोणैः ससुव्रत
अथवाष्टनवांशे तु ससप्तांशं सविस्तरम्  ३१
विविधं स्यात्समायुक्तं कर्णकूटमुदाहृतम्
कर्णकूटसमायुक्तं हीनं वा तद्विशेषतः  ३२
प्रविष्टानादिसर्वाङ्गं प्रग्रीवं च प्रकल्पयेत्
वृत्तग्रीवसमायुक्तं तथैव शिखरं घटम्  ३३

शिखरे तु महानासी चतरश्रा महादिशि
दिशिभद्राय तं वास्ते मञ्चेल्पा नासिका कला ३४
प्रस्तरेऽष्टाल्पनासी वा जयद्वंद्वमुदीरितम्
तदेव कर्णकूटाभ्यां षट्पञ्चांशे शिखी तथा ३५
नागरे त्युचितं कराठकूटाकारं प्रकल्पयेत्
कराठकूटसमामध्या भद्रं तत् भद्रनासिका ३६
अन्तरालं च तत्तुल्यं चुद्रं पञ्चांशसंयुतम्
अभद्रं वाथभद्रं वा कूटं वा भद्रनासिका ३७
भद्रानासी विशालं वा मध्ये भद्रं विशालकम्
त्रिचतुष्पञ्चषट्सप्तभागं वा सदनं स्तकम् ३८
कृत्वैकांशं द्विभागं वा मध्ये भद्रविशालकम्
त्रिभागं च विशालं तु मध्ये भद्रविशालकम् ३९
दराडं वाध्यर्धदराडं वा द्विदराडं वाथ निर्गतिः
यथेष्टं शिखरं कराठं श्रीभोगान्तमुदाहृतम् ४०
वस्वर्णं पट्टसंयुक्तं स्वतारे कुडयपादयोः
स्वतारे कुडयपादाढयान्निष्क्रान्तरहितं तु वा ४१
श्रीभद्रमिति विख्यातं सर्वदेवात्मकं परम्
तदेव सदने बाह्ये मध्ये भद्रयुतं तु वा ४२
तोरणैर्जालकाढयं तत् श्रीविशालमुदाहृतम्
तदेव वेदिका कराठं शिखरं च घटं तथा ४३
वस्वङ्गं पादसंयुक्तं चतुर्दिग्भागनासिकम्
चतस्रो नासिकाश्चाल्पाश्शिखरे तु विदिक्स्थताः ४४
पादं प्रत्यल्पनासाढयं स्वस्तिबन्धं तदुच्यते
तदेव मध्यभद्रं च कर्णकूटविहीनकम् ४५
सुशोभनावहं ख्यातं सर्वदेवप्रियावहम्

शिखरे तु कृता नासी प्रस्तराष्टौ द्विरष्टधा ४६
युगाश्रं शिखरं कराठं वेदिकं चैव श्रीकरम्
तदेव शिखरे चाष्टावल्पनासिसमन्वितम् ४७
महानास्य परे कोष्ठसंयुतं शीर्षकं भवेत्
नासिका विस्तृतं दराडद्वयं वापि त्रिदराडकम् ४८
कोष्ठदीपं समाख्यातमुत्सेधं नासिका समम्
विदिक्षु भद्रनासाढ्यं शिखरं परिकल्पयेत् ४९
वृत्तमस्तककराठाढ्यं वस्वग्रं वा गलं शिरः
वृत्तकोशं समाख्यातं वस्वश्रं राजकेसरम् ५०
प्रासादस्य तु विस्तारः पञ्चसप्ताष्ट वा भवेत्
त्रिभागं वा द्विभागं वा प्राग्वद्वा मध्यभद्रकम् ५१
दराडं वाऽध्यर्धदराडं वा द्विदराडं वा त्रिदराडकम्
मध्यभद्रस्य निष्क्रान्तं भद्रापेक्षितहर्म्यके ५२
यन्महानासिकापेतं शिरः स्वायकवृत्तकम्
पादं प्रत्यल्पनासाढ्यं कराठं वै शीर्षकाकृति ५३
कल्याणसुन्दरं ख्यातं सर्वदेवार्हकं परम्
तदेव भद्रनासाढ्यं पूर्वापरं द्विजोत्तम ५४
ललाटनासिकोपेतं पार्श्वयोः द्विजसत्तम
समं वा सायतं वाथ कल्पितं कोशलं भवेत् ५५
तलं प्रतिविमानादि उन्नतं त्वथ वक्ष्यते
स्कन्दं वै पूर्वदिग्भागे दक्षिणामूर्तिदक्षिणे ५६
पश्चिमे विष्णुमूर्तिं वा लिंगोद्भवमथापि वा
धाारमुत्तरे विप्र भारस्थाने तु वर्जयेत् ५७
मराडपे दक्षिणे भद्रे स्थापयेत् हि विनायकम्
पूर्वे वा पश्चिमे तस्य नृत्तमूर्तिं प्रकल्पयेत् ५८

दुर्गामुत्तरदिग्भागे क्षेत्रपालं तु वा द्विज
स्थानं वा सदनं वाथ दिशि मूर्तिं प्रकल्पयेत् ५९
एवं धरातलोर्ध्वे तु कल्पयेद्विधिवत् बुधः
स्कन्दं वै पूर्वदिग्भागे शक्रं वा सितरोहितम् ६०
हस्तिर्विधी नब्जकासी न एक एव समन्वितम्
दक्षिणे दक्षिणामूर्तिं वीरभद्रमथापि वा ६१
पश्चिमे नारसिंहं तु सौम्यमूर्तिमथापि वा
उत्तरे तु विधातारमब्जस्थं द्विजसत्तम ६२
प्रस्तरोपरि कर्तव्यमेकद्वित्रितले तथा
चतुर्भूम्यादिभूमासु महेशस्तु यथेष्टगः ६३
उमास्कन्दादिसहितः महेशः परिकीर्तितः
अन्ये देवाश्च गन्धर्वाः सिद्धा दैत्या मरुद्गणाः ६४
कलान्तयुगभूम्यादि ग्रीवे च प्रस्तरान्तके
इष्टमूर्तिमविष्टांशे कल्पयेत्कल्पवित्तमः ६५
गलस्यादिस्थमाञ्चोर्ध्वे कोणेषु वृषभं कुरु
कोणं प्रति द्वयं चैकं वृषभं शयनं कुरु ६६
भूतं वाथ चतुष्कोणे हृदयांजलिसंयुतम्
कल्पयेत्पद्मपीठे द्वे आसीनं तु बृहत्तनुम् ६७
आमोदं चाग्निकोणे तु प्रमोदं नैर्ऋते भवेत्
प्रमुखं वायुकोणे तु दुर्मुखीशानकोणके ६८
श्वेतं रक्तं तथा पीतं कृष्णमग्न्यादिषु क्रमात्
यमो वै देवता ह्येताः तासामावाहनं कुरु ६९
करालमुद्गगुल्मासु ककविंकणलेपनम्
नानालंकारसंयुक्तं नानालीलासमायुतम् ७०
नानाक्रीडा समायुक्तं सुधया धातुभिस्तथा

यथोचितं कल्पयेत्तु शूलादाविष्टकं भवेत् ७१
एवं तलमिदं ख्यातं द्वितलं तु ततो विदुः
इति काश्यपशिल्पे एकतलविमानलक्षणं नाम सप्तविंशः पटलः

## अथाष्टाविंशः पटलः

## द्वितललक्षणम्

अथ वक्ष्ये विशेषेण द्वितलस्य तु लक्षणम्
प्रासादमानवत् कुर्यात् विस्तारोच्चं च निर्गमम् १
विन्याससूत्रयोरन्तर्व्यासं सप्तर्तुवा भवेत्
एकांशं कूटविस्तारं कोष्ठं तु द्विगुणायतम् २
कूटव्याससमं कोष्ठं विस्तारं द्विजसत्तम
शेषं हारान्तरं कोष्ठं पार्श्वयोस्तु सपञ्जरम् ३
हारान्तरमशेषं वा त्रिपादं वार्धमेव वा
पञ्जरव्यासमाख्यातं कूटबाह्यसमो गतिं ४
अन्तः प्रवेशं वा मानसूत्राणि प्रयुतं तु वा
पञ्जरं कर्णकूटाभं नासिकाकारमेव वा ५
प्रासादोच्चं तु विभजेत् अष्टाविंशतिभागया
गुणांशं धरा तलोत्सेधं रसांशं चरणोदयम् ६
प्रस्तरोच्चं गुणांशं स्यात् भूतांशं चरणोदयम्
द्विभागं प्रस्तरोत्सेधमेकांशं वेदिकोदयम् ७
द्विभागांशं गलोत्सेधं सार्धं वेदं शिरोदयम्
अत्यर्धांशं शिखामानं कल्पितं शान्तिकं भवेत् ८
चतुर्विंशतिभागं तु कृत्वा च सदनोदयम्
सार्धार्धांशमधिष्ठानं तद्विधं चरणोदयम् ९
प्रस्तरोच्चं गुणांशं स्यात् तलिपं सार्धषट् भवेत्

गुणांशं मञ्चमानं तु व्योमांशं वेदिकोदयम्  १०
सार्धाग्न्यंशं गलोत्सेधं भूतांशं शिखरोदयम्
अर्धांशं शिखरं मानं पौष्टिकं सदनं भवेत्  ११
तदेव गलमानं तु सार्धद्व्यंशेन कल्पयेत्
शेषं पूर्ववदेवं तु त्रयस्त्रिंशोदये कृते  १२
जयदं सदनं ह्येतत्सर्वदेवप्रियावहम्
षट् त्रिंशत् विभजेद्यर्धं घटतुंगं धरातलम्  १३
वस्वंशपादमानं तु सार्धाग्न्यंशं तु प्रस्तरम्
सप्तांशं चरणोत्सेधं गुणांशं च गलोदयम्  १४
भूतांशं शिखरोच्चं तु स्तूप्युच्चं सार्धभागया
अर्धभूतं सदनं ह्येतत्कल्पयेत्कल्पवित्तमः  १५
चत्वारिंशतिभागं तु कर्तव्यं सदनोदयम्
अधिष्ठानोच्चं वेदांशं स्तंभं तद्द्विगुणायतं  १६
युगांशं मञ्चमानं च स्तंभलिप्सार्धसप्तकम्
त्रिभागं प्रस्तरोत्सेधं द्विभागं वेदिकोदयम्  १७
त्रिभागं ग्रीवमानं तु शिखरं सप्तभागया
शेषं शिरोदयं ख्यातं विमानं सार्वदेशिकम्  १८
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत्
चतुष्कूटं चतुश्शालं पञ्जराष्टकसंयुतम्  १९
षडष्टैवाल्पनासिं च पादं प्रतिप्रकल्पयेत्
कल्पितं वेदिकाद्यैस्तु नानाचित्रैर्विचित्रितम्  २०
एतत्स्वस्तिकमाख्यातं सर्वदेवप्रियावहम्
तदेव शीर्षकाग्रेषु पार्श्वयोः स्वल्पनासिका  २१
स्वस्तिभद्रमिदं ख्यातं मम प्रीतिकरं भवेत्
तदेव नतकूटं च कोष्ठं नासिकमञ्चकम्  २२

नतपञ्जरसंयुक्तं यथेष्टं क्रमशीर्षतः
स्तूपिर्घटं गलं तं च श्रीकरं समुदाहृतम् २३
तदेव कूटकोष्ठाः स्युः कूटशालोन्नताः समाः
निम्नपञ्जरवन्तोऽसौ यत्तत्कैलासमुच्यते २४
तदेव कूटकोष्ठौ द्वौ निम्नोन्नतविवर्जितौ
अन्तरप्रस्तरोपेतौ समसूत्रगतौ नतौ २५
हारान्तरे विशेषेण युग्मं वायुग्मपञ्जरम्
चतुष्कूटं चतुश्शालं षडष्टैवाल्पनासिकम् २६
वस्वग्रं वेदिकोपेतं वर्तुलं शीर्षकं गलम्
शिखरं वसुनासाढ्यं भद्राभद्रं चतश्चतुः २७
वेदिकातोरणाढ्यं तु रुद्रकान्तमिदं परम्
कूटात्कोष्ठकनिष्ठान्तं दण्डं वाद्धयर्धदण्डकम् २८
द्विदण्डं वा त्रिदण्डं वा कूटात्कोष्ठस्य निर्गतिः
नानाधिष्ठानसंयुक्तं नानास्तंभविमानितं २९
प्रागुक्तानां तु सर्वेषां कल्पितं वापि हीनकम्
तदेव शिखरे चार्धकोष्ठकं तु चतुष्टयम् ३०
चतुरश्रशिरोपेतं चतुष्कूटसमन्वितम्
षडष्टनासिकोपेतं स्वस्तिबन्धमुदाहृतम् ३१
तदेव कूटकोष्ठौ द्वौ चान्तरप्रस्तरान्वितौ
हारपञ्जरसंयुक्तं षडष्टौ वाल्पनासिकम् ३२
सर्वालंकारसंयुक्तमेतत्कल्याणसुन्दरम्
तदेव शिखरे चार्धकोष्ठकं तु विवर्जयेत् ३३
चत्वारि नासिकोपेतं शिखरं परिकल्पयेत्
नानालंकारसंयुक्तं एतत्पाञ्चालमुच्यते ३४
तदेवाष्टाश्रवेदीयं कन्धरं शिखरं घटम्

शिरोष्टौ च महानासियुक्तं तद्विष्णुकान्तकम्  ३५
सान्तरं प्रस्तरोपेतं कूटकोष्ठौ चतुश्चतुः
लंबपञ्जरसंयुक्तं वृत्तशीर्षककन्धरम्  ३६
दण्डं वाऽद्धयर्धदण्डं वा द्विदण्डं वा त्रिदण्डकम्
कर्णकूटं तु कोष्ठानि निष्क्रान्तं परिकल्पयेत्  ३७
षडष्टनासिकोपेतं चत्वारि शिखरे वर
एतत् विश्वकरान्यस्यात् ईश्वरस्य प्रियावहम्  ३८
तदेव त्रिचतुर्भागे भागाधिक्यं यथाक्रमम्
तथा शीर्षं च कण्ठं च वेदिकं तत्प्रकल्पयेत्  ३९
स्तूपित्रयसमायुक्तं एतत् मंगलमुच्यते
तदेवायतवृत्ताभं गान्धारमिति विद्यते  ४०
तारादर्धाधिकादर्धमायताश्रं समाश्रकम्
द्व्यश्रवृत्तमुपानादि कल्पितं वा तदेव हि  ४१
समाश्रमायताश्रं वा बाह्यतः परिकल्पयेत्
वृत्तगर्भगृहोपेतं कूटकोष्ठकसंयुतम्  ४२
वृत्ताभं कर्णकूटं च शीर्षं स्यात्परिकल्पयेत्
कूटकोष्ठाल्पनीडाश्च समसूत्रैश्च कल्पयेत्  ४३
नाम्नामनोहरं रम्यं सर्वदेवार्हकं परम्
उपानादिस्तूपिपर्यन्तं वृत्तं चेत्तु बहिर्बहिः  ४४
शेषं प्रागिव कर्तव्यं शिवकान्तमिदं परम्
चतुरश्रमधिष्ठानं गर्भगेहं तथैव च  ४५
अधिष्ठानोपरिष्टात्तु स्तूप्यन्तं वर्तुला कृति
कूटकोष्ठादिसर्वाङ्गयुक्तं गर्भगृहं भवेत्  ४६
चतुरश्रमधिष्ठानमायताश्रमथापि वा
रसाश्रं शिखरं कण्ठं कूटकोष्ठादिसंयुतं  ४७

यथोचितं तु संकल्प्य नाम्नाकुबेरकान्तकम्
एवं तु द्वितलो योग्यं भेदमष्टादश स्मृतम् ४८
इष्टकाभिः शिलाभिर्वा होमादिस्तूपिकान्तकम्
कल्पितं सञ्चितं हर्म्यं पुमानिव घनी कृतम् ४९
दृषद्भिरिष्टकाभिः संमिश्रहर्म्यं तदेव हि
श्रेष्वादौ दिषवृत्कार्यं तदूर्ध्वे त्विष्टकाक्रिया ५०
इष्टकादारूहिं मिश्रं षराडमेतदुदाहृतम्
तदेवोपचितं ख्यातं घनाघनमुदाहृतम् ५१
अशेषं तरुभिः कार्यं सञ्चितं स्त्रीति विद्यते
अघनं चेति तत्कार्यं एवं पुंषराडयोषितां ५२
वक्त्रमराडपमानं च गर्भगृहविशालकम्
भित्तिव्यासं चतुस्सर्वे प्राग्वदेव तलोक्तवत् ५३
द्वारस्योभयपार्श्वे तु पादयोरन्तरे द्विज
द्वारपालगुहां कुर्यात् तलादुत्तरसिंहकम् ५४
बिंबोदितं विशालं च दराडमात्रं तु वेशनम्
सर्वधामनि कर्तव्यं प्रवेशरहितं तु वा
एवं द्वितलमाख्यातं त्रितलं तु ततो विदुः ५५
इति काश्यपशिल्पे द्वितलविधानं नाम अष्टाविंशः पटलः

## अथैकोनत्रिंशः पटलः

## त्रितललक्षणम्

अथ वक्ष्ये विशेषेण त्रितलं शृणु सुव्रत
तस्य विस्तारमानं च पुरोक्तं हर्म्यमानकं १
विन्याससूत्रयोरन्तरष्टाविंशे तु भाजिते
एकांशं कूटविस्तारं शालायामं च तद्द्वयम् २

अंशं त्रिपादमर्धं वा पञ्जरव्यासमुच्यते
शेषं हारान्तरं ख्यातं निष्क्रान्तादीनि पूर्वकं ३
ऊर्ध्वभूमिरसं शेषं कूटव्यासमुदाहृतम्
शालायामं द्विभागं तु शेषं हारान्तरं भवेत् ४
हारान्तरं तु संपाद्यं त्रिपादं वाथ पञ्जरम्
ऊर्ध्वभूमित्रिभागैकं मध्यभद्रं विधीयते ५
दण्डं सार्धद्विदण्डं वा मध्यभद्रस्य नीप्रकम्
प्रासादस्योच्छ्रयं भानुद्विगुणांशं विभाजिते ६
द्विभागं भूतलोत्सेधं वेदांशं चरणोदयम्
मञ्चमानं द्विभागेन पादोनं चतुरंशकैः ७
पादायां वह्निसाध्यांशं प्रस्तरोच्चमुदाहृतम्
पादोच्चं सार्धवह्न्यंशं सपादांशं तु मञ्चकम् ८
अर्धांशं वेदिकामानं गलमानं शिवांशकम्
सार्धद्व्यंशं तु शिखरं स्तूप्युच्चं त्वेकभाजया ९
एवं हि कल्पितं गेहं शान्तिकं त्विति विद्यते
चतुर्विंशति चायामे तलोच्चं तु द्विभागया १०
वेदांशं चरणायामं पञ्चांशं मञ्चमानकम्
पादोन चतुरंशं तु पादायाममितीष्यते ११
सार्धांशं प्रस्तरोत्सेधं साध्यर्धं ह्युदयं भवेत्
अर्धार्धांशं तु मञ्चोच्चं मध्यांशं वेदिकोदयम् १२
शिवांशं ग्रीवमानं तु गुणांशं शिखरोदयम्
सपादांशं शिखामानं पौष्टिकं तदुदाहृतम् १३
सप्तविंशतिभागं तु कृत्वा च सदनोदयम्
द्विभागं धरातलोत्सेधं युगांशं चरणोदयम् १४
मञ्चमानं द्विभागेन वेदांशं चरणायतम्

पादोन द्व्यंश मञ्चोर्ध्वं तलिपोच्चं तु तद्वयम् १५
सार्धांशं प्रस्तरोत्सेधमेकांशं वेदिकोदयम्
द्विभागं ग्रीवमानं तु वेदभागं तु शीर्षकम् १६
शेषं स्तूप्युदयं ख्यातं जयदं तदुदाहृतम्
चत्वारिंशत् द्वयाधिक्यं भागं कृत्वा गृहोन्नतम् १७
अधिष्ठानं त्रिभागार्धं सप्तांशं चरणोदयम्
तलोच्चसदृशं मञ्चं तलिपं सार्धषट्ककम् १८
गुणांशं प्रस्तरोत्सेधं भूभागं च षडंशकम्
सार्धद्व्यंशं तु मञ्चोच्चमेकांशं वेदिकोदयम् १९
गलमानं द्विभागं स्यात् भूतांशं शिखरोदयम्
द्विभागं स्तूपितुङ्गं तु प्रोक्तमद्भुतहर्म्यकम् २०
प्रासादस्य तु तुङ्गेन षडष्टांशविभाजिते
अधिष्ठानं युगांशं तु वस्वंशं चरणायतं २१
मञ्चमानं तु वेदांशं तलिपं सार्धसप्तकम्
सार्धत्रिभागं मञ्चोर्ध्वे सप्तांशं चरणायतम् २२
प्रस्तरोच्चं गुणांशं तु शिवांशं वेदिकोदयम्
द्विभागं गलमानं तु रसांशं शिखरोदयम् २३
द्विभागं तु शिखामानमेवं स्यात् सर्वदेशिकम्
अष्टकूटाष्टशालाभिः कलापञ्जरसंयुतम् २४
द्विर्नवत्यल्पनासाढ्यं जन्मादाग्रं युगाश्रकम्
नानाधिष्ठानसक्तानां नानापादैरलंकृतम् २५
शिखरे भानुनासाढ्यं महाङ्घ्रं चतुरष्टकं
कूटकोष्ठन्नतादीनि नागराद्युचितं भवेत् २६
स्वस्तिकं भवनं ख्यातं तदेव शिखरे द्विज
चतुर्महानासिकोपेतं अल्पनास्यष्टविवर्जितम् २७

स्वस्तिभद्रमिदं ख्यातं सर्वदेवप्रियावहम्
तदेव वृत्तशिखरं गलं वै वेदिका तथा २८
रुद्रकान्तमिदं नाम्ना मम प्रीतिकरं परम्
तदेव शीर्षकोणेषु अल्पनासीद्वयाह्वयं २९
कल्पितं शिवकान्तं स्यात् शिवप्रीतिकरं गृहं
तदेव वेदिकाकण्ठं शीर्षकं च घटं तथा ३०
वस्वश्रं कल्पितं यत्तत् विष्णुकान्तमिदं परं
विन्याससूत्रयोरन्तं नवभागविभाजिते ३१
एकांशं कूटविस्तारं द्विभागं कोष्ठदीर्घकम्
कोष्ठं प्रतिद्विकोष्ठं स्यादर्धांशं पञ्जरं ततः ३२
शेषं हारान्तरं ख्यातं कल्पयेत् कल्पवित्तमः
चतुष्कूटाष्टशालांशं भानुपञ्जरसंयुतम् ३३
तं चाल्पनासिकोपेतं वस्वश्रं शीर्षकं गलम्
महानास्यष्टकोपेतं शिखरं तत् द्विजोत्तम ३४
नाम्ना शुद्धविमानं तु धर्मप्रीतिकरं भवेत्
तदेवाष्टाश्रवेदी तु वित्ताभं शिखरं गळम् ३५
विमाना कृति नाम्ना तु सर्वदेवार्हकं भवेत्
तदेव शिखरं तण्ठं युगाश्रं ब्रह्मकान्तकम् ३६
तदेव सायताश्रं तु सपादं सत्रिभागिकम्
वसुभागं तु विस्तारमायामं दशधा भजेत् ३७
एकांशं कूटविस्तारं शालायामं गुणांशकम्
शेषं हारान्तरं ख्यातं प्रागिवैव प्रकल्पयेत् ३८
षडष्टभागं विस्तारमायामं चोर्ध्वभूमिके
एकांशं कूटविस्तारं कोष्ठदीर्घं त्रियंशकम् ३९
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्

ऊर्ध्वभूमिविस्तृतं चाग्निभागैः करण्ठभद्रकम् ४०
द्व्यंशवृत्तं च वेदी च करण्ठं वै शीर्षकं तथा
चतुष्कूटाष्टशालं च भानुपञ्जरसंयुतम् ४१
हारान्तरं चतुर्विंशत् कल्पयेदादिभूतले
चतुष्कूटं चतुश्शालं पञ्जराष्टकसंयुतम् ४२
षोडशान्तरसंयुक्तं शतसंख्याल्पनासिकम्
ललाटं नासिकायुक्तं पार्श्वयोः भद्रनासिकं ४३
तथैव नासिका पृष्ठे पृष्ठे चिञ्चोपमाचरेत्
नानाधिष्ठानसंयुक्तं नानाचांघ्रिसमायुतम् ४४
सर्वालंकारसंयुक्तं हस्तिपृष्ठमिदं भवेत्
मानसूत्रान्तरं व्यासं नवभागविभाजिते ४५
गुणांशं गर्भगेहं तु शिवांशं कुडचविस्तृतम्
परितोलिंद्रमेकांशं हारव्यासं शिवांशकम् ४६
एवं हि कल्पिते तेषु करण्ठकूटं शिवांशकम्
मध्ये कोष्ठं गुणांशं स्यात् एकांशं पञ्जरं ततः ४७
हारान्तरं तदर्धांशं कल्प्यैवं प्रथमे भुवि
अथवा पञ्जराणां तु अर्धांशं वा विधीयते ४८
शेषं हारान्तरं ख्यातं परितस्त्वेवमाचरेत्
कोष्ठमध्ये त्रिदण्डेन महानासीविनिर्गतम् ४९
ऊर्ध्वभूमौ षडंशे तु कूटकोष्ठायतं द्वयम्
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ५०
ऊर्ध्वभूमिविस्तृतार्धं त्वर्धदण्डेन निर्गतम्
चतुरश्रमधिष्ठानं वस्वश्रं शीर्षकं गलम् ५१
आदौ तले चतुष्कर्णे कूटो वेदाश्रशीर्षकः
अष्टाश्रं शीर्षकं कूटं चोर्ध्वभूमौ प्रकल्पयेत् ५२

अष्टकूटाष्टकोष्ठं च कलापञ्जरसंयुतम्
शताल्पनासिकोपेतं शिखरेन्द्रं महान्तरम्  ५३
भद्रकोष्ठमिदं नाम्ना सर्वदेवार्हकं वरम्
तदेव कर्णकूटं च शीर्षकं वर्तुळा कृति  ५४
प्रासादशीर्षकं कराठं वृत्ताकारं प्रकल्पयेत्
शिखरे तु चतुर्दिक्षु भद्रनासिसमन्वितम्  ५५
तथा दिक्ष्वल्पनासाढ्यं वृत्तकूटमिदं परम्
तदेव शिखरे कोणे क्षुद्रनास्यष्टकान्वितम्  ५६
युगाश्रं कर्णकूटानां शीर्षकं परिकल्पयेत्
शेषं प्रागिव कर्तव्यं श्रीकराठं तदुदाहृतम्  ५७
तदेवाष्टांशमधिकमायामं चतुरश्रकम्
शालामध्ये महानासी भद्रहीनं प्रकल्पयेत्  ५८
शालाभं मस्तकं कराठं वृत्तायतमथापि वा
स्तूपित्रयसमायुक्तमेतन्नाम्ना सुमंगलम्  ५९
मानसूत्रान्तरं धर्म भागं कृत्वा द्विजोत्तम
गर्भगेहं तु वेदांशं गृहपिराडचंशमावृतम्  ६०
परितो लिंद्रमेकांशं हारं भागेन कल्पयेत्
तदेकं कूटविस्तारं मध्ये कोष्ठाय तं द्वयम्  ६१
तयोर्मध्ये तु भागेन पञ्जरव्यासमुच्यते
हारान्तरं तथांशेन पञ्जरस्य तु पार्श्वयोः  ६२
अष्टांशां चोर्ध्वभूमिं तु कृत्वांशं कूटविस्तृतम्
शालाया द्विगुणायामं तयोर्मध्ये तु पञ्जरम्  ६३
एकांशेनैव कर्तव्यं शेषं हारान्तरं भवेत्
ऊर्ध्वभूमिं चतुर्भागं द्विभागं मध्यभद्रकम्  ६४
दराडं वा द्विदराडं वा त्रिदराडं वाथ निर्गतिः

वेदाश्रं तदधिष्ठानं तद्वत्कराठं च शीर्षकम्  ६५
अष्टशालाष्टकूटं च पञ्जरं षोडशान्वितम्
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम्  ६६
उन्नतौ कूटकोष्ठौ च सान्तरप्रस्तरान्वितौ
गान्धारमिति विख्यातमष्टाश्रं वा गलं शिरः  ६७
श्रीविशालमिति ख्यातं वर्तुला वेदिका गलम्
शीर्षं चैव च कर्तव्यं शेषं पूर्ववदाचरेत्  ६८
श्रीभागाढ्यमिति ख्यातं सर्वदेवार्हकं परम्
वृत्ते वृत्तायते द्व्यश्रवृत्ते चैव षडश्रके  ६९
कूटकोष्ठादिसर्वाङ्गं प्रागिवैव प्रकल्पयेत्
वर्षस्थलं मराडलं च त्यजेत् कर्णं च शीर्षकम्  ७०
वक्षस्थलविहीनानां कर्णं शीर्षसंयुतम्
कूटकोष्ठादिसर्वाङ्गमुचितं नागरादिकं  ७१
नानालंकारसंयुक्तं नानाचित्रैर्विचित्रिकम्
गर्भगेहविशालं च गृहं पिराड्यग्रमराडपम्  ७२
एकभूमिविधानोक्तमनुक्तानां विशेषतः
त्रितलं ह्येवमाख्यातं चतुर्भूममथोच्यते  ७३

इति काश्यपशिल्पे त्रितलविधानं नाम एकोनत्रिंशः पटलः

## अथ त्रिंशः पटलः

### चतुर्भूमिः

अथ वक्ष्ये विशेषेण चतुर्भूम्यादिलक्षणम्
विस्तरोत्सेधमानं तु प्रोक्तं प्रासादमानके  १
ख्यंशं मानसूत्रं तु कृते गर्भगृहांशकम्
गृहपिराड्यलिन्द्राहारं प्रत्येकं चैकभागतः  २

विन्याससूत्रयोरन्तर्वसुधा विभजेत् बुधः
कर्णकूटशतांशं तु कोष्ठं तद्विगुणायतम्  ३
पञ्जरव्यासमंशेन शेषं सारान्तं भवेत्
पुनरप्यूर्ध्वभूमौ च वसुभागविभाजिते  ४
कर्णकूटं च कोष्ठं च पञ्जरं पूर्ववत् भवेत्
तदूर्ध्वभूमौ षड्भागे शिवंशं कूटविस्तृतम्  ५
कोष्ठायामीश्वरी भागमर्धांशं पञ्जरस्य तु
शेषं हारान्तरं प्रोक्तं हीनाधिक्यं तु नाश्रयेत्  ६
ऊर्ध्वभूमानि भागेन व्योमांशमर्धभद्रकम्
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं वाथ निर्गमम्  ७
प्रासादोच्चं तु विभजेत् संगृह्य त्रिंशदंशकम्
सार्धाष्टांशमधिष्ठानं भूतांशं चरणोदयम्  ८
अधिष्ठानसमं मञ्चं पादं पादोन पञ्चकम्
पद्मांशं कर्ममञ्चोच्चं कल्पयेत् द्विजसत्तम  ९
सार्धं वेदांशमपरं पद्मांशं प्रस्तरोदयम्
सपादवेदभागं च चरणोदयमिष्यते  १०
पादेनर्क्षांशमञ्चोच्चं शिवांशं वेदिकोदयम्
कण्ठोच्चं तु द्विभागं स्यात् सार्धं वेदांशशीर्षकम्  ११
स्तूप्युच्चं तु द्विभागं स्यात् शान्तिकं भवनं भवेत्
चत्वारिंशत् द्व्ययाधिक्यं भागं कृत्वा गृहोन्नतम्  १२
गुणांशं तलमानं तु रसांशं चरणोदयम्
प्रस्तरं त्वग्निभागेन भूतांशं तलिपोदयम्  १३
गुणांशं प्रस्तरोत्सेधं पादं पादार्धपञ्चकम्
पादद्विभागं मञ्चोच्चं सार्धवेदाङ्घ्रिकोदयम्  १४
द्विभागं मञ्चमानं तु शिवांशं वेदिकोदयम्

अत्यर्धांशं गलोत्सेधं युगांशं शिखरोदयम् १५
द्विभागं तु शिखामानं पौष्टिकं तदुदाहृतम्
पञ्चांशद्विभजेद्धर्म्यं तुङ्गं स्तूप्यवसानकम् १६
सार्धाग्न्यंशमधिष्ठानं सर्पांशं चरणोदयम्
गुणार्धं प्रस्तरोत्सेधं रसांशं पाददैर्घ्यकम् १७
गुणांशं मञ्चमानं तु ऊर्ध्वपादं तु तत् द्वयम्
त्रिभागं प्रस्तरोत्सेधं पादोच्चं सार्धपञ्चकम् १८
प्रस्तरोच्चं त्रिभागैकं शिवांशं वेदिकोदयम्
द्विभागं गळमानं तु भूतांशं शिखरोदयम् १९
सार्धांशं स्तूपिमानं तु जयदं तदुदाहृतम्
उपानादि स्तूपिपर्यन्तं पञ्चांशविभजेद्बुधः २०
तथोच्चं सार्धमग्न्यंशं सप्तांशं चरणोदयम्
तलोच्चसदृशं मञ्चं तलिपं सार्धषट्ककम् २१
पादाधिकत्रिभागेन मञ्चमानमुदाहृतम्
पादोच्चं रसभागेन गुणांशं प्रस्तरोदयम् २२
सार्धं पञ्चांशमभ्युच्चं मञ्चं सार्धद्विभागया
एकांशं वेदिकामानं द्विभागं स्याद्गलोदयम् २३
पञ्चांशं शिखरोत्तुङ्गं पादद्व्यंशं शिखोदयम्
तद्भूतं सदनं ह्येवं कल्पयेत् कल्पवित्तमः २४
आरामोच्चं तु पञ्चांशं भागं कृत्वा विशेषतः
सार्धांशांशमधिष्ठानं धात्वंशं चरणोदयम् २५
प्रस्तरोच्चं त्रिभागैकं चरणं सार्धषट् भवेत्
सपादाग्न्यंशं मञ्चं स्यात् तलिपं सार्धषट्ककम् २६
त्रिभागं प्रस्तरोत्सेधं पादोच्चं सार्धपञ्चकम्
पादोनाग्न्यंशं मञ्चोच्चं शिवांशं वेदिकोदयम् २७

द्विभागं गलमानं तु पञ्चांशं शिखरोदयम्
व्योमांशं तु शिखामानं विमानं सार्वदेशिकम्  २८
होमादिस्तूपिपर्यन्तं वेदाश्रं परिकल्पयेत्
भानुकूटं तथा कोष्ठं भानुद्विगुणपञ्जरम्  २९
शिखरे तु चतुर्दिक्षु भद्रनासी चतुष्टयम्
पादं प्रत्यल्पनासाढ्यं शिखरेष्टाल्पनासिकम्  ३०
कूटकोष्ठादिसर्वाङ्गं नागराद्युचितं कुरु
एकाकारतलस्तंभं सुभद्रमिति विद्यते  ३१
तदेव शिखरेष्टाल्पनासिकारहितं भवेत्
तत् ब्राह्ममिति विख्यातं सर्वदेवप्रियावहम्  ३२
तदेव शिखरे घण्टवृतं श्रीकान्तमुच्यते
वस्वश्रं शीर्षकण्ठं वै श्रीमण्डनमुदाहृतम्  ३३
तदेव शिखरे चाष्टमहानासी समन्वितम्
श्रीभवन्तं च व्याख्यातं शालाभद्रयुतं तु वा ३४
विभद्रं वाथ भक्तव्यं सर्वेषां सद्मनामपि
श्रीकान्तं शिखरेष्टाल्पनासाढ्यं श्रीविशालकम्  ३५
नानाघ्रितलयुक्तास्ते तत्तन्नाम्ना प्रकीर्तिताः
विस्ताराढ्य --- मंसं भास्करं तु विशीर्षकम्  ३६
सर्वदालयमित्युक्तं सर्वदेवार्हकं परम्
मानसूत्रान्तरं नन्दभागं कृत्वा विशेषतः  ३७
गर्भगेहं गुणांशं स्यात् भागेन गृहपिण्डिका
अलिंद्रांशे तु कर्तव्यं हारं भागेन कल्पयेत्  ३८
ततो विन्याससूत्रान्तव्यासं नन्दविभाजिते
एकांशं कूटविस्तारं गुणांशं कोष्ठदीर्घकम्  ३९
एकांशं पञ्जरव्यासमर्धांशं हरयान्तरम्

शालामध्ये महानासी निवृत्तं त्वर्धभागया ४०
ऊर्ध्वभूमान्दभागे कूटमंशेन कल्पयेत्
शाला तद्विगुणायामं शिवांशं पञ्जरं भवेत् ४१
शेषं हारान्तरं चोर्ध्वे भूतारं रसभाजिते
कूटमेकेन कर्तव्यं कोष्ठं तत् द्विगुणायतम् ४२
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्
ऊर्ध्वभूमिं तथार्धं तु मध्यदण्डेन निर्गमम् ४३
चतुरष्टाश्रवृत्ताभं कूटानां शीर्षकं क्रमात्
कर्करी दण्डवत्कोष्ठं स्वश्रं हर्म्यादिशीर्षकम् ४४
महानास्यष्टकोपेतं शीर्षकं परिकल्पयेत्
रविकोष्ठं च कूटं च रविद्विगुणपञ्जरम् ४५
प्रागिवोच्चांशमानं तु ततः कोष्ठमिदं परम्
गेहव्यासं तु धर्मांशं कृत्वा नीचगृहच्छतु ४६
गृहपिण्डत्र्यंशमानेन अलिंद्रं त्वेकभागकम्
हारव्यासं शिवांशेन परितः परिकल्पयेत् ४७
विन्याससूत्रयोरन्तर्व्यासे धर्मविभाजिते
कर्णकूटं तदेकांशं कोष्ठायामं तु तत् द्वयम् ४८
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्
चतुष्कूटाष्टकोष्ठं च पञ्चारंभंतु संख्यया ४९
हारान्तरं चतुर्विंशत् कल्पयेत्प्रथमं तलं
आलिंद्रं जलपादं स्यात् प्रस्तरं तु घनी कृतम् ५०
ऊर्ध्वभूः नवभागं स्यात् शिवांशं कूटविस्तरम्
कोष्ठं तत् द्विगुणायामं पञ्जरं शममानतः ५१
शेषं हारान्तरं ख्यातं क्षुद्रपञ्जरसंयुतम्
ऊर्ध्वभूमौ त्रिभागैकं मध्ये दण्डेन निर्गमम् ५२

चतुरश्रमधिष्टानमष्टाश्रं मस्तकं गळम्
शिखरेष्टमहानास्यः पादं प्रत्यल्पनासिका ५३
कर्णकूटं तु भागं स्यात् कोष्ठं षोडशभिर्युतम्
नतकूटोन्नतकोष्ठमन्तरप्रस्तरान्वितम् ५४
क्षुद्रनीडाष्टविंशं स्यात् नानाश्रं सूकराकृति
नानाचित्रैर्विचित्रं तु तुङ्गभागं तु पूर्ववत् ५५
जयावहमिदं ख्यातं सर्वदेवार्हकं वरम्
तदेव वर्तुलं कर्णं शीर्षान्तं सर्वमानिकं ५६
तदेव सान्तरं मञ्चं कूटं कोष्ठं च पञ्जरम्
कूटानां शीर्षकं स्तूपि कुंभं कर्णं च वर्तुलम् ५७
एवं स्यात् मूलभूमौ तु वस्वश्रं मध्यमे तले
युगाश्रं मध्यभूमौ तु कर्णकूटं प्रकल्पयेत् ५८
सुखावहमिदं ख्यातं सर्वदेवार्हकं परम्
तदेव कूटं कोष्ठं च अन्तरं प्रस्तरं विना ५९
व्यासोच्चसमसूत्रं तु सदाजयगृहं भवेत्
तदेव शिखरं कराठं युगाश्रं धारकान्तकम् ६०

इति काश्यपशिल्पे चतुर्भूमिविधानो नाम त्रिंशः पटलः

## अथैकत्रिंशः पटलः

## कूटकोष्ठादिलक्षणम्

वक्ष्येऽहं कूटकोष्ठानां पञ्जराणां च लक्षणम्
द्वितलादि तलान्तानां सममेव प्रकीर्तितम् १
तलं प्रत्युदितं व्यासं समाश्रं कर्णकूटकम्
सार्धताश्रं तु कोष्ठं स्यात् चतुष्पादैकपादकम् २
अधस्तात् स्तंभवर्गं च प्रस्तरं कर्णशीर्षकम्

स्तूपिवर्गसमायुक्तौ कूटकोष्ठौ विशेषतः ३
एवमादितले कुर्यात् धरातलं विनोर्ध्वतः
कूटशालौ च कर्तव्यौ पञ्जराश्च तथैव च ४
ऊर्ध्वपादोदयं सप्तभागं कुर्यात् विशेषतः
एकांशं वेदिकोत्सेधं सार्धांशं गलमुन्नतम् ५
शीर्षं तु विगुणांशेन शेषं स्तूप्युदयं भवेत्
एवं तु कूटकोष्ठौ द्वौ कल्पयेत्तु तलं प्रति ६
अथवा कूटकोष्ठानामुदयं तु वदाम्यहम्
उत्तरस्योर्ध्वसीमान्तं हंसमालोर्ध्वसंयुतं ७
कपोतं वाऽवसानं वा भागं पूर्ववदेव तु
सान्तरप्रस्तरं चेत्तु प्रस्तरस्योर्ध्वसोमकम् ८
वेदिकोर्ध्वं समं वाथ सान्तरप्रस्तरान्वितम्
तदूर्ध्वं रुद्रधाभज्य एकांशं वेदिकोदयम् ९
गुणांशं चरणोच्चं तु पादोनद्व्यंशमञ्चकम्
स्तूप्युत्सेधं सपादांशं क्रमशः परिकल्पयेत् १०
एवं हि कूटकोष्ठौ द्वौ कल्पयेत् कल्पवित्तमः
कूटस्यास्य त्रिभागैकं स्वनासीविस्तृतं भवेत् ११
तत् द्व्यासत्रिचतुष्पञ्चसप्तभागेन नीप्रकम्
कर्णकूटे कपोतं तु नासिकानिर्गमं भवेत् १२
चतुर्दिक्षु चतुर्नासीः कूटानां परिकल्पयेत्
एकस्तूपिसमायुक्तं नीप्रवेशं विमानकम् १३
तदेवाश्रं वसुकोणं वा वृत्ताभं वा गलं शिरः
नागराद्युचितं कल्प्यं कर्णकूटं विशेषतः १४
शालानां पार्श्वयोर्विप्र ललाटाख्या तु नासिका
शालाव्यासविशाला तु उन्नता मुखपट्टिका १५

स्वस्तूप्यग्रसमं प्रोतं शालानास्यश्रसीमकम्
शालादैर्घ्यत्रिभागैकं मुखनासिविशालकम्  १६
कूटानां नासिकानीप्रं महानासिवदाचरेत्
स्तूपित्रयसमायुक्तं नागरे भवने द्विज  १७
कालानां द्राविडानां तु स्तूपिः स्यात् द्वित्रिसंख्यया
शालानां वेसराणां तु स्तूप्येकं वा चतुष्टयम्  १८
गळांशे कूटकोष्ठानां देवताद्यास्तु कल्पयेत्
एवं हि कूटकोष्ठास्तु पञ्जरस्त्वधुनोच्यते  १९
उपानाद्युत्तरान्तं तु नवभागविभाजिते
उपपीठमथांशेन पद्मांशेन धरातलम्  २०
वेदांशं चरणायामं मञ्चमध्यर्धभागकम्
अर्धांशं वेदिकामानं कपोतान्तं गलोदयम्  २१
प्रतिवाजनसीमान्तं पञ्जरोच्चमुदाहृतम्
प्रासादस्य कपोतं तु यथा शोभांशनिर्गतिः  २२
पञ्जरो नासिकाकारः कूटकोष्ठाकृतिस्तु वा
हस्तिवृष्ठविमानं स्यात् शिखरान्तमथापि वा  २३
एवं त्वनेकभेदेन पञ्जरा कृतिरुच्यते
यथेष्टं तेषु कर्तव्यं हर्म्यकोष्ठेषु हर्म्यकं  २४
एकेन भूमिहर्म्येषु ---
एवमादितले कुर्यादन्तरप्रस्तरान्वितम्  २५
मानसूत्रं तु निष्क्रान्तं युक्तमेव यदाचरेत्
पञ्जरं नीप्ररहितं प्रस्तरोर्ध्वे विशेषतः  २६
कर्णकूटं समं वाथ त्रिपादं वाऽवधिर्भवेत्
तद्व्यासं भद्रकं तुङ्गं युक्त्या पञ्जरमाचरेत्  २७
तलं प्रत्यूर्ध्वपादोच्चं प्रागिवैव नवांशकम्

गुणांशं वा घनाभित्तिः छत्रं शीर्षसमं युतम् २८
पादायामं चतुर्भागमत्यर्धांशं तु प्रस्तरम्
अर्धांशं वेदिकामानं कपोतान्तं गलोदयम् २९
प्रतिवाजनसीमान्तं पञ्जरोदयमीरितम्
शेषं प्रागिव कर्तव्यमेवं निष्क्रान्तपञ्जरम् ३०
निष्क्रान्तरहितं चेत्तु प्रस्तरोर्ध्वं तु वाजनम्
पञ्जरे कूटकोष्ठौ चेत् पादे पादान्तरेऽपि वा ३१
गोपानाधारिता कल्पमहाशालपरा क्रमात्
हस्तपादद्वयोपेतां दृष्टकीर्णजटान्विताम् ३२
रौद्रदृष्टिसमायुक्तां नृत्तवाञ्जनसन्निभाम्
गोपानं यत्नतो धृत्वा पादौ हस्तौ तदन्वितौ ३३
एवं वा राजहंसाभं सिंहव्याळाभमेव वा
गोपानं शिरसा वाच्यं हस्तपादौ यथेष्टगौ ३४
कूटादिलक्षणं प्रोक्तं पञ्चभूमिविधिं ततः ३५

इति काश्यपशिल्पे कूटादिलक्षणं नाम एकत्रिंशः पटलः

## अथ द्वात्रिंशः पटलः

### पञ्चभूमिलक्षणम्

अथ वक्ष्ये विशेषेण पञ्चभूम्यास्तु लक्षणम्
विस्तारोत्सेधमानं तु प्रोक्तं प्रासादमानके १
विस्तारं रुद्रधाभज्य गुणांशं गर्भगेहकम्
द्विभागं गृहपिण्डी स्यात् अलिन्दं त्वेकभागकम् २
हारभानेकभागेन कर्तव्यमळिन्दघनभित्तिकम्
वर्षस्थलसमं युक्तं कल्पयेत्प्रस्तरोपरि ३
धरातले च मञ्चोर्ध्वे द्वितीये वा त्रिभूमिके

देवतास्थापनं कुर्यात् तावदेव घनीकृतम् ४
विन्याससूत्रयोरन्तः रुद्रभागविभाजिते
शिवांशं कर्णकूटं तु मध्यकोष्ठं गुणांशकम् ५
तयोर्मध्येकभागेन पञ्जरव्यासमुच्यते
हारान्तरमथांशेन कल्पयेत् कल्पवित्तमः ६
तदूर्ध्वभूमिविस्तृतं नन्दभागं कृत्वांशं सौष्टिकम्
मध्ये कोष्टाग्निभागं पञ्जरं त्वंशमानतः ७
हारान्तरमथार्धांशं कल्पयेत्तु द्वितीयके
तदूर्ध्वभुवनं चाष्टभागांशं कर्णकूटकम् ८
द्विभागं कोष्ठकं कुर्यात् भागं स्यात् पञ्जरं तथा
हारान्तरमथार्धांशं कृत्वा लक्षणसंयुतम् ९
ऊर्ध्वभूमौ रसांशे तु कूटव्यासमथांशकम्
शालादीर्घं विभागं स्यात् दुग्धाशं पञ्जरं ततम् १०
शेषं हारान्तरं ख्यातं बलकुञ्जरमेव वा
तदूर्ध्वभूमिविन्यासे मध्ये दण्डेन निर्गतिः ११
गृहोच्चं तु षडष्टांशे पदोनांशं धरातलम्
सार्धपञ्चांशं पादोच्चं सार्धद्व्यंशं तु मञ्चकम् १२
सपादं पञ्चभागं तु चरणोदयमीरितम्
मञ्चाच्चं द्वयमर्धांशं पञ्चांशं चरणायतम् १३
सपादद्व्यंशं मञ्चोच्चं पादमर्धो न पञ्चकम्
द्विभागं प्रस्तरोत्सेधं सार्धवेदांघ्रितुंगकम् १४
पादो न द्व्यंशं मञ्चं स्यात् शिवांशं वेदिकोदयम्
कण्ठं वा तेन पक्षांशं सार्धवेदं शिरोदयम् १५
द्विभागं स्तूपिमानं तु शान्तिकं भवनं भवेत्
सवेदचत्वारिंशत्तु भागं कृत्वा गृहोन्नतम् १६

गुणांशं तलतुङ्गं तु भूतांशं चरणोदयम्
प्रस्तरं चाग्निभागं तु पादं सार्धयुगं भवेत् १७
सपादद्विभागं मञ्चं स्यात् तलिपं स्यादधीयुगम्
प्रस्तरोच्चं द्विभागेन वेदांशं चरणोदयम् १८
पञ्चांशं मञ्चमानं स्यात् पादं सार्धगुणांशकम्
अध्यर्धं मञ्चमानं तु व्योमांशं वेदिकोदयम् १९
द्विभागं गळमानं तु सार्धवेदांशं शीर्षकम्
अत्यर्धं तु शिखामानं पौष्टिकं सदनं त्विदम् २०
सदनोच्चं तु षट्त्रिंशत् भागं कृत्वा द्विजोत्तम
अधिष्ठानं द्विभागेन वेदांशं चरणायतम् २१
सत्रिपादशिवांशेन मञ्चमानं प्रकल्पयेत्
सार्धाग्न्यंशं तु तलिपं तदर्धं मञ्चमानकम् २२
सपादानलं पादं स्यात् मञ्चमत्यर्धभागकम्
गुणांशं पादपीठं तु सपादांशं तु प्रस्तरम् २३
एकांशं वेदिकामानं पादो न द्व्यंशकं गलम्
सपादाग्न्यंशं शीर्षं तु शेषं स्तूप्युदयं भवेत् २४
जयदं भवनं ह्येवं कल्पयेत् कल्पवित्तमः
विमानोच्चं तु विभजेत् त्रयस्त्रिंशत् विभागकम् २५
द्विभागं धरणीमानं वेदांशं चरणोदयम्
प्रस्तरोच्चं द्विभागं तु सार्धत्रिंशांघ्रिणोदयम् २६
प्रस्तरं पादरहितं द्विभागेन विधीयते
त्रिभागं चरणायामं तदर्धं मञ्चमानकम् २७
सार्धद्विभागं वादोच्चं सपादांशेन मञ्चकम्
स्तंभं पादाधिकद्व्यंशं मञ्चमानं सपादकम् २८
व्योमांशं वेदिकामानमत्यर्धांगुलमानकं

सार्धत्रिभागं शिखरं द्विभागं स्तूपिमानकम् २९
अद्भुतं भवति ह्येवं कल्पयेद्देवतार्हकम्
चतुर्विंशतिभागं तु कृत्वा च सदनोदयम् ३०
अत्यर्धांशं तलोत्सेधं गुणांशं पादमानकम्
तदर्धं मञ्चमानं तु पादोदकं गुणांशकम् ३१
तस्यार्धं प्रस्तरोत्सेधं द्व्यर्धमंघ्र्युदयं भवेत्
प्रस्तरं तु सपादांशं स्तंभं पादाधिकद्वयम् ३२
तदर्धं मञ्चमानं तु साष्टांशद्व्यंशमंघ्रिकम्
एकांशं प्रस्तरोत्सेधं अर्धांशं वेदिकोदयम् ३३
त्रिपादं गळमानं तु पादो न द्व्यंशकं शिरः
अष्टांशरहितं व्योमभागं स्तूप्युदयं भवेत् ३४
सार्वकामिकमेवं तु कर्तव्यं सदनं द्विज
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ३५
कलाशाला कलासौष्ठी पञ्जरं चतुरष्टकम्
पादं प्रत्यल्पनासाढ्यं हारान्तं नासिकाद्वयम् ३६
भद्रनासी चतुष्कं तु शिखरे च प्रकल्पयेत्
क्षुद्रनासी द्वयं कोणे कल्पितं ब्रह्मकान्तकम् ३७
कूटास्वनन्तरं चाढ्यं प्राजापत्यमुदाहृतम्
तदेवोन्नतकूटं तु कोष्ठेनताः स्वमन्तकाः ३८
स्वायंभुवमिदं गेहं सर्वदेवार्हकं परम्
तदेव वेदिकाकोष्ठं शीर्षकं वसुकोणकम् ३९
शालामध्येंशमानेन निर्गतिः कोष्ठ एव वा
भद्रकान्तमिति ख्यातं कूटकोष्ठं परिस्समम् ४०
समञ्चं वा विमञ्चं वा जनार्दनमुदाहृतम्
तदेव कोष्ठमध्ये तु भद्रहीनमथापि वा ४१

मध्यभद्रयुतं वापि मराडलं शीर्षकं गलम्
अतिभद्रमिति ख्यातं सर्वमेवार्हकं परम् ४२
तदेव कूटं कोष्ठं च पञ्जरं च समञ्चकम्
सोन्नतं सर्वतो भद्रं धर्मप्रीति करं भवेत् ४३
विमलं कूटं कोष्ठं च पञ्जरं समसूरकम्
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम् ४४
नानालंकारसंयुक्तं युग्मपञ्जरसंयुतम्
शिखरेष्टाल्पनासाढ्यं महानासी चतुष्टयम् ४५
वीरभद्रमिति ख्यातं सर्वदेवप्रियावहम्
तदेवाष्टकशालाढ्यमादिभूमौ द्विभागया ४६
भानुपञ्जरसंयुक्तं शेषं प्रागिव कल्पयेत्
प्रागुक्तनामचाख्यातं तेष्विष्टं परिकल्पयेत् ४७
पञ्चभौमं समाख्यातं षट्तलं तु ततः शृणु ४८

इति काश्यपशिल्पे पञ्चतलविधानं नाम द्वात्रिंशः पटलः

## अथ त्रयस्त्रिंशः पटलः

### षट्भूमिविधिः

अथ वक्ष्ये विशेषेण षट्भूमिकविधिं परम्
तस्य विस्तारतुङ्गं तु प्रसादमानवत् भवेत् १
विस्तारं रुद्रयाभज्य गुणांशं गर्भगेहकम्
द्विभागं गृहपिराडं स्यात् अलिंद्रं शिवभागकम् २
द्वारं शिवांशमानेन अलिंद्रं वा स्थलं भवेत्
धरातले द्वित्रिभूमौ --- ३
पादे तत्स्थापनं यत्र तावद्वै सुदृढं घनम्
बाह्योचितमलं कारं घनाभ्यन्तरवत् कुरु ४

रव्यंशं विभजेत्तारं विन्याससूत्रमन्तरं
भागं सौष्टिकविस्तारं कोष्ठं तत् द्विगुणायतम्  ५
भागेन पञ्जरव्यासं शेषं हारान्तरं भवेत्
चतुष्कूटाष्टकोष्ठं च भानुपञ्जरसंयुतम्  ६
हारान्तरं चतुर्विंशत् कल्पयेदादिभूतले
पञ्जरं हर्म्यमध्ये तु कण्ठेषु सौष्ठिकं भवेत्  ७
पार्श्वयोः कर्णकूटस्य पञ्जरं परिकल्पयेत्
कोष्ठपञ्जरयोर्मध्ये कल्पयेत्तु विशेषतः  ८
तदूर्ध्वभूदशांशेषु व्योमांशं कर्णकूटकम्
मध्ये पञ्जरमेकांशं कर्णकूटमिवाकृतिः  ९
द्विभागं कोष्ठदीर्घं स्यात् अर्धांशं पञ्जरस्य तु
शेषं हारान्तरं ख्यातमेषां संख्याऽऽदिभूमिवत्  १०
तस्योर्ध्वभूविशालं तु नवभागविभाजिते
कण्ठकूटमथांशेन मध्यशाला गुणांशकम्  ११
पञ्जरव्यासमेकांशमर्धांशं हारमन्तरम्
तदूर्ध्वं वसुभागं तु शिवांशं कूटविस्तृतम्  १२
मध्ये कोष्ठं द्विभागेन एकांशं पञ्जरं ततम्
हारान्तरमथार्धांशं कल्पयेत् कल्पवित्तमः  १३
तदूर्ध्वभूमिविस्तारं षट्भागं विभजेत् समम्
कूटमेकांशमानेन कोष्ठायामं तु तत् द्वयम्  १४
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्
तदूर्ध्वभूमिविस्तारमर्धांशं मध्यभद्रकम्  १५
दण्डं वाप्यर्धदण्डं वा द्विदण्डं भद्रनीप्रकम्
तत्तुङ्गं सप्तपञ्चाशदंशं कृत्वा तु देशिकः  १६
अधिष्टानोच्चं पञ्चाग्नि षट्भागं चरणोदयम्

पादहीनाग्निभागं तु मञ्चमानमुदाहृतम् १७
पादोच्चं सार्धपञ्चांशं मञ्चं सार्धविभागकम्
पादाधिकं तु पञ्चांशं पादायाममिति स्मृतम् १८
सार्धद्विभागं मञ्चोच्चं पञ्चांशं चरणोदयम्
पादोदयं द्विभागं तु प्रस्तरोदयमीरितम् १९
पादहीनं तु पञ्चांशं तलिपस्योदयं भवेत्
द्विभागं प्रस्तरं ख्यातमर्धाधिकयुगांशकम् २०
पादायाममिति ख्यातं पादोनद्व्यंशं मञ्चकम्
व्योमांशं वेदिकामानं पादोनद्व्यंशकं गळम् २१
सार्धवेदांशमानेन शीर्षकं परिकल्पयेत्
पञ्चांशं तु विमानं च षट्भूमिकमेव हि २२
साष्टाविंशत्तलानि स्युः विंशत् कूटसमन्वितम्
षडष्टपञ्जरोपेतं पादं प्रत्यल्पनासिकम् २३
होमादिस्तूपिपर्यन्तं चतुरश्रं प्रकल्पयेत्
शिखरे तु महानासीश्चतस्रः परिकल्पयेत् २४
अंबुजासनमाख्यातं सर्वदेवप्रियावहम्
तदेव शिखरं कण्ठं वस्वश्रं परिकल्पयेत् २५
अशेषं सौष्टिकान्तं तु शीर्षकं चतुरश्रकम्
उन्नतावनतोपेतं भद्रं वा भद्रकोष्ठकम् २६
सान्तरप्रस्तरोपेतौ हीनौ वापि समुन्नतौ
सुशांकरमिदं ख्यातं तदेव सौष्टिशीर्षकम् २७
वृत्ताकारं प्रकर्तव्यं नाम्ना तत् भद्रलीनकम्
तदेव शिखरे चाष्टौ कल्पिनासि युतं महत् २८
शिवभद्रमिति ख्यातं शिवप्रीतिकरं परं
तदेव द्व्यश्रवृत्ताभं शीर्षकं गळसंयुतम् २९

मुखे ललाटनासाढ्यं नागेंद्रमिति संज्ञितम्
षट्भूमिरेवमाख्याता सप्तभूमिरथोपरि ३०
इति काश्यपशिल्पे षट्भूमिविधानं नाम त्रयस्त्रिंशः पटलः

अथ चतुस्त्रिंशः पटलः

सप्तभूमिलक्षणम्

अथ वक्ष्ये विशेषेण सप्तभूमेस्तु लक्षणम्
प्रासादमानविधिना व्यासोदयं प्रकल्पयेत् १
रव्यंशं विभजेत्तारं वेदांशं गर्भगेहकम्
पक्षांशं भित्तिविष्कंभमेकेनालिंद्रमिष्यते २
हारान्तरमथांशेन परितः परिकल्पयेत्
विन्याससूत्रयोरन्तं भान्वंशेन समं भवेत् ३
एकांशं कूटविस्तारं कोष्ठं तत् द्विगुणायतम्
पञ्जरव्यासमेकांशं शेषं हारान्तरं भवेत् ४
चतुष्कूटाष्टशाला च भानुपञ्जरसंख्यया
तदूर्ध्वभूमिविस्तारं धर्मभागं विभाजिते ५
कर्णकूटं च कोष्ठं च पूर्ववत् परिकल्पयेत्
पञ्जरव्यासमर्धांशं शेषं हारान्तरं भवेत् ६
तस्योर्ध्वभूमिविस्तारं धर्मभागविभाजिते
पञ्जरं कूटं कोष्ठं च पूर्ववत् परिकल्पयेत् ७
ऊर्ध्वभूमौ नवांशे तु मध्ये शालाग्निभाजिते
व्योमांशं कर्णकूटं स्यात् एकांशं पञ्जरं ततम् ८
हारान्तरमथार्धांशं तस्योर्ध्वं वसुभाजिते
मध्ये शाला द्विभागेन शेषं पूर्ववदाचरेत् ९
तदूर्ध्वभूमिविस्तारं रसभागविभाजिते

कूटमेकांशमित्युक्तं शाला तत् द्विगुणायता १०
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्
तदूर्ध्वभूम्यग्निभागैकं मध्ये दण्डेन निर्गतम् ११
सप्तषष्टीति भागं तु कर्तव्यं सदनोदयम्
सपादाग्निरधिष्टानं सार्धषट्काङ्घ्रितुंगकम् १२
तदर्धं मञ्चमानं तु षट्भागं चरणोदयम्
त्रिपादवत् द्विभागं तु मञ्चमानमुदाहृतम् १३
सार्धभूतांशमंघ्र्युच्चं सार्धद्व्यंशं तु प्रस्तरम्
सपादपञ्चभागं तु स्तंभमानमुदाहृतम् १४
पर्स्तरं सार्धपञ्चांशं भूतांशं चरणोदयम्
सपात् द्विभागं मञ्चं स्यात् स्त्रीत्रिपादं युगांशकम् १५
चरणोदयमित्युक्तं प्रस्तरोच्चं द्विभागकम्
पादोच्चं सार्धवेदांशं पादो न द्व्यंशमञ्चकम् १६
व्योमांशं वेदिकोत्सेधं पादोनद्व्यंशकं गळम्
अर्धाधिकयुगांशं तु शिखरोदयमिष्यते १७
पद्मांशं स्तूपिमानं तु गण्यं सप्ततलं विदुः
पञ्जरं कूटं कोष्ठं च समसूत्रे तु कल्पितम् १८
होमादाग्रं युगाग्रं तु शिखरे वेदनासिका
शाला षट्त्रिंशति युतं भानुद्विगुणकूटकम् १९
षष्टिपञ्जरसंयुक्तं पादं प्रत्यल्पनासिकम्
नानाधिष्ठानसंयुक्तमेकाकारमथापि वा २०
एकेनाकृतिरंघ्री तु समुज्वलमुदाहृतम्
तदेवान्तरकूटाः स्युः सान्तरप्रस्तरान्वितं २१
श्रीच्छन्दमिति विख्यातं सर्वदेवार्हकं परम्
तदेव नतकूटाश्च कोष्ठो नान्ताः समञ्चकाः २२

श्रीविशालमिति ख्यातं सर्वदेवप्रियावहम्
तदेव शीर्षं कराठं च अष्टाश्रं वेदिका तथा २३
श्रीकान्तमिति विख्यातं कूटं कोष्ठसमं तु वा
समं च नतकूटं स्यात् श्रीप्रियं तददुदाहृतम् २४
तदेव वृत्तं शिखरं स्तूपिश्चैव गळं तथा
रुद्रकान्तमिति ख्यातं रुद्रप्रीतिकरं परम् २५
तदेव कर्णकूटं तु वेदाश्राष्टाश्रमराडलम्
क्रमेणादि तलात् कल्प्यं वृत्तभद्रमिदं परम् २६
तदेवोन्नतकूटं च नतशाला समन्वितम्
कूटं च मस्तकं वृत्तं सुवृत्तमिति विद्यते २७
सोन्नतं कूटं कोष्ठं च पञ्जरोन्नतमञ्चकम्
यथेष्टं शिखराकारं कराठं स्तूपिर्घटं तथा २८
युगाश्रं शीर्षकोपेतं कराठकूटं प्रकल्पयेत्
शिवभद्रमिति ख्यातं शिवप्रीतिकरं परम् २९
तदेव कूटं कोष्ठं च दराडं वाप्यर्धदराडकं
द्विदराडं वाथ निष्क्रान्तं भद्रं वा भद्रपञ्जरम् ३०
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम्
नानाचित्रैर्विचित्रं तु शिवसौख्यमुदाहृतम् ३१
तदेव गर्भगेहं तु वृत्तं वाथ युगांशकम्
वृत्तमेवं हि बाह्ये तु वृत्ताभसौष्टिकान्वितम् ३२
शेषं पूर्ववदुद्दिष्टं नानासर्वाङ्गमराडलम्
पञ्जरं कूटं कोष्ठं च अन्तरप्रस्तरं विना ३३
यथेष्टं शिखराकारं शिवप्रीतिकमिष्यते
एवं सप्ततलं ख्यातं वसुभूमिरथोपरि ३४

इति काश्यपशिल्पे सप्तभूमिविधानं नाम चतुस्त्रिंशः पटलः

## अथ पञ्चत्रिंशः पटलः

### वसुभूमिविधानम्

अथ वक्ष्ये विशेषेण वसुभूमिविधिं परम्
प्रासादमानविधिना संग्राह्यं विस्तृतोदयम् १
त्रयोदशविभागं तु कृत्वा प्रासादविस्तृतम्
भूतांशं गर्भगेहं तु द्विभागं गृहपिण्डिका २
अलिंद्रं चैकभागेन हारं भागेन कल्पयेत्
अथवाऽनलभागेन गर्भगेहं विधीयते ३
भागेन गृहपिण्डी स्यात् अलिंद्रं त्वेकभागकम्
कुड्यमेकेन कर्तव्यं अलिंद्रं तु शिवांशकम् ४
तदर्धं पञ्जरव्यासं भद्रं वाऽभद्रमेव वा
भानुकोष्ठं चतुष्कूटं कलापञ्जरसंयुतम् ५
हारान्तरं च द्वात्रिंशत् कल्पयेदादिभूतले
वर्षस्थलमलिंद्रं स्यात् प्रस्तरान्तघनीकृतम् ६
तदूर्ध्वभूमिविस्तारं त्रयोदशविभाजिते
कुड्यकोष्ठादिसर्वाङ्गमादिभूमिमिवैव तु ७
तदूर्ध्वभूविशालं तु भानुभागविभाजिते
कर्णकूटं तदेकांशं शालाभागद्विभागकम् ८
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्
पञ्जरकूटकोष्ठानां संख्यात्वादितलोक्तवत् ९
हारान्तरमथार्धांशं लंबपञ्जरसंयुतम्
तस्योर्ध्वभूविशालं तु भानुभागविभाजितम् १०
कूटकोष्ठादिसर्वाङ्गं मानसंख्यादिपूर्ववत्
तदूर्ध्वभू दशांशे तु कूटं कोष्ठं च पूर्ववत् ११
हारान्तरमथार्धांशं लंबपञ्जरसंयुतम्

तस्योर्ध्वभूविशाले तु वसुभागविभाजिते १२
कर्णकूटं तदेकांशं मध्ये शाला द्विभागकम्
पञ्जरव्यासमेकांशमर्धांशं हारमन्तरम् १३
चतुष्कूटं चतुश्शूलं वसुपञ्जरसंयुतम्
हारान्तरं तथा प्रोक्तं कल्प्यैवं षट् कलं भवेत् १४
तदूर्ध्वभूमिभागं तु षट्भागं विभजेत्समम्
कूटव्यासमथैकांशं मध्ये कोष्ठं द्विभागकम् १५
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्
तदर्धं पञ्जरव्यासं भद्रं वाऽभद्रमेव वा १६
भानुकोष्ठं चतुष्कूटं कलापञ्जरसंयुतम्
तदूर्ध्वभूविशालाढ्ये मध्ये दण्डेन नीप्रकम् १७
कूटात् कोष्ठं तु नीप्रं वा मध्यशाला त्वनीप्रका
कूटं कोष्ठमशेषं तु समसूत्रगमेव वा १८
ससप्तसप्ततिभागं कृत्वा हेमसमुच्चयम्
सार्धत्रिंशमधिष्ठानं सप्तांशं चरणोदयम् १९
प्रस्तरं तु सपादांघ्रि सार्धषट्कं पदोदयम्
सार्धद्विभागं मञ्चोच्चं कल्पयेत्तु विशेषतः २०
सपादं पञ्चभागं तु चरणोदयमीरितम्
प्रस्तरं सार्धपद्मांशं भूतांशं चरणोदयम् २१
सपादभागं मञ्चं स्यात्पादं पादो न पञ्चकम्
मञ्चमानं द्विभागं तु सार्धं पादं युगांशकम् २२
सत्रिपादांशं मञ्चोच्चं व्योमांशं वेदिकोदयम्
कण्ठं पादो न पद्मांशं सार्धवेदांशं शीर्षकम् २३
कण्ठमानसमं स्तूपि तुङ्गमित्यत्र कथ्यते
स्तूप्यन्तं तदुपानादि वेदाश्रं परिकल्पयेत् २४

श्रौष्ठश्रं वायुगाश्रं स्यात् स्तंभं प्रत्यल्पनासिकम्
शिखरे तु चतुर्नासी युक्तास्ते स्युः महान्तराः  २५
एकाकारतलं स्तंभं शिवच्छन्दमुदाहृतम्
तदेव नतशाखाः स्युर्मञ्चकाः सौष्ठिकोन्नतम्  २६
वागीशमिति विख्यातं सर्वदेवप्रियावहम्
चतुरश्राष्टवृत्ताभं सौष्ठिकं वा पुनःपुनः  २७
विमानशिखरं कराठमष्टाश्रं परिकल्पयेत्
तदष्टभागं विख्यातं धर्मप्रीतिकरं परम्  २८
तदेव कूटं कोष्ठं च समंचं वा विमञ्चकम्
समोन्नतं तथा कूटं नानाहस्तानतांघ्रिकम्  २९
नानाचित्रविचित्रं तु तत्पर्वतमिति स्मृतम्
तदेव शिखरं कराठं वृत्ताभं परिकल्पयेत्  ३०
नाम्ना कैलासमित्युक्तं मम प्रीतिकरं परम्
एवमष्टतलं ख्यातं नवभूमिमथोपरि  ३१

इति काश्यपशिल्पे वसुभूमिविधानं नाम पञ्चत्रिंशः पटलः

## अथ षट्त्रिंशः पटलः

### नवभूमिविधिः

अथवक्ष्ये विशेषेण नवभूमिविधिं परम्
प्रासादमानविधिना गेहायामं च विस्तृतम्  १
पञ्चांशं विभजेत्तारं गुणांशं गर्भगेहकम्
द्विभागं गृहपिराडी स्यादलिंद्रं त्वेकभागकम्  २
व्योमांशकूडय विस्तारमलिंद्रं तत्समं भवेत्
हारव्यासं शिवांशेन कल्पयेत् कल्पवित्तमः  ३
अथवा षोडशांशं तु प्रासादं विभजेत्समम्

युगांशं गर्भगेहं तु द्विभागं गृहपिरिडका ४
अलिंद्रं तु शिवांशेन व्योमांशं कुडय विस्तृतम्
अलिंद्रं व्योमभागेन हारावैवं तु तत्समम् ५
विन्याससूत्रयोरन्तः कलांशं विभजेत्समम्
एकांशं सौष्ठिकव्यासं कोष्ठं तत् द्विगुणायतम् ६
पञ्जरव्यासमेकांशमेकांशं कूटमानकम्
हारान्तरं च द्वात्रिंशत् कल्पयेदादिभूतले ७
एवमेव प्रकर्तव्यं द्वितीयं च महीतले
तृतीयभूतलायामे मनुभागविभाजिते ८
अर्धांशं पञ्जरव्यासं शेषं पूर्ववदाचरेत्
तद्वत् चतुस्तलं चैव कल्पयेत् देशिकोत्तमः ९
पञ्चभूमितलायामे भानुभागविभाजिते
एकांशं कूटविस्तारं शाला तत् द्विगुणायता १०
अर्धांशं पञ्जरव्यासं तदर्धं हारमन्तरम्
भानुशाला च कूटाभं पञ्जरं षोडशैव तु ११
तदूर्ध्वभूविशाले तु वसुभागविभाजिते
एकांशं सौष्ठिकव्यासं मध्ये भागद्विशालया १२
पञ्जरव्यासमेकांशमर्धांशं हारमन्तरम्
तदूर्ध्वभूविशालं तु रसभागविभाजितम् १३
एकांशं कूटविस्तारं कोष्ठं तत् द्विगुणायतम्
पञ्जरव्यासमर्धांशं शेषं हारान्तरं भवेत् १४
तदूर्ध्वभूविशाले तु गुणभागविभाजिते
मध्यांशं दराडमानेन निर्गमं परिकल्पयेत् १५
साष्टविंशतिभागं तु कृत्वा गेहोदयं बुधः
पादो न चतुरंशं तु धरातलमिति स्मृतम् १६

पादोच्चं सार्धसप्तांशं सार्धाग्न्यंशं तु प्रस्तरम्
सप्तांशं चरणोच्चं तु सपादाग्न्यंशं मञ्चकम्  १७
सार्धषट्कांघ्रितुंगं तु गुणांशं मञ्चमानकम्
षट्भागं पादमानं तु पादो नाग्न्यंशं मञ्चकम्  १८
पादोच्चं सार्धभूतांशं सार्धपञ्चांशमञ्चकम्
सपादपञ्चभागं तु पादोत्सेधं समुच्यते  १९
प्रस्तरं सार्धपञ्चांशं भूतांशं चरणोदयम्
पादाधिकद्विभागं तु प्रस्तरस्योदयं भवेत्  २०
पादो न पञ्चकं पादं प्रस्तरोच्चं द्विभागकम्
सार्धवेदांशकं पादं पादो न द्व्यंशं मञ्चकम्  २१
शिवांशं वेदिकोत्सेधं कण्ठं चाप्यर्धभागकम्
शीर्षं सपादवेदांशं पादो न द्व्यंशकं शिखा  २२
पादं प्रत्यल्पनासाढ्यं शिखरं वेदनासिकम्
समंचं नतकूटाढ्यं कूटाढ्यं चतुरश्रकम्  २३
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत्
अशेषं मध्यशालं तु पार्श्वकोष्ठं तु निर्गतिः  २४
दण्डं वाध्यर्धदण्डं वा नाम्ना ललितभद्रकम्
तदेवोन्नतकोष्ठाः स्युः समंचं नतभद्रकम्  २५
ब्रह्मकान्तमिदं नाम्ना सर्वदेवप्रियावहम्
समञ्चं वाप्यमञ्चं वा कूटकोष्ठसमन्वितम्  २६
प्रादेशमिति विख्यातं सर्वदेवप्रियावहम्
तदेव शिखरं कण्ठं वस्वश्रं चाष्टनासिकम्  २७
युगाश्रं वसुकोणं वा वृत्तं वा सौष्टिकं पुनः
सौम्यशेषं युगाश्रं स्यात् श्रीवर्धनमिदं परम्  २८
समञ्चौ कूटकोष्ठौ द्वौ विमंचौ वा समानकौ

वृत्ताश्रवशिरोपेतं चतुर्दिग्भद्रनासिकम्  २९
विदिक्षु युग्मनासाढ्यं युग्मं वाऽयुग्ममेव वा
युग्मपञ्जरसंयुक्तं सुपद्ममिति विद्यते  ३०
तदेव वृत्तसौष्ठयग्रं कृतवर्धनमुच्यते
तदेव गर्भगेहं तु वृत्तं वृत्तगृहं भवेत्  ३१
एवं नवतलं ख्यातं दशभूमिरथोपरि  ३२

इति काश्यपशिल्पे नवभूमिविधानं नाम षट्त्रिंशः पटलः

## अथ सप्तत्रिंशः पटलः

## दशभूमिलक्षणम्

अथ वक्ष्ये विशेषेण दशभूमेस्तु लक्षणम्
पार्श्वप्रासादमानोक्तप्रमाणैरुदयं ततम्  १
कल्पयित्वा तु तत्तारं मनुभागविभाजितम्
वेदांशगर्भगेहं तु गृहपिण्डी त्रिभागकम्  २
अलिंद्रं त्वेकभागेन हारान्तरं शिवांशकम्
विन्याससूत्रयोरन्तर्मनुभागविभाजिते  ३
एकांशं कूटविस्तारं शाला दीर्घं तु तत् द्वयम्
एकांशं पञ्जरव्यासं पादं हारान्तरं भवेत्  ४
चतुष्कूटं चतुश्शालं पञ्जरं षोडशान्वितम्
हारान्तरं च द्वात्रिंशत् कल्पयेदादिभूतले  ५
तदूर्ध्वभूमिविस्तारे त्रयोदशविभाजिते
एकांशं कण्ठकूटं तु शाला तत् द्विगुणायता  ६
एकांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्
ऊर्ध्वभूविस्तृते भानुभागे त्वंशं तु सौष्टिकम्  ७
द्विगुणं कोष्ठदीर्घं तु अर्धांशं पञ्जरं ततम्

पादं हारान्तरं ख्यातं तेषां संख्यादिपूर्ववत्  ८
तस्योर्ध्वतलविस्तारं रुद्रभागविभाजितं
पादं पञ्जरविस्तारं शेषं पूर्ववदेव हि  ९
तदूर्ध्वभूदशांशे तु व्योमांशं कूटविस्तृतम्
कोष्ठं तत् द्विगुणायामं शेषं हारान्तरं भवेत्  १०
हारान्तरत्रिभागैकं पञ्जरव्यासमुच्यते
तदूर्ध्वभूनवांशे तु शिवांशं सौष्टिकं भवेत्  ११
अत्यर्धांशं तु कोष्ठं स्यात् शेषं हारान्तरं समम्
हारान्तरद्विभागैकं पञ्जरव्यासमुच्यते  १२
अष्टांशं विभजेत्सप्ततलविस्तारमेव हि
कूटमेकांशमानेन मध्ये शाला द्विभागकम्  १३
पञ्जरव्यासमेकांशं हारान्तरं तदर्धकम्
चतुष्कूटं चतुश्शालं पञ्जराष्टकसंयुतम्  १४
हारान्तरं कलासंख्यं कल्प्यैवं सप्तकं कलम्
सप्तांशं विभजेदष्टतलस्यैव तु विस्तरम्  १५
प्राग्वत्कूटं च कोष्ठं च शेषं हारान्तरं तथा
हारे तु पञ्जरव्यासमग्निभागैकविस्तृतम्  १६
नवभूमिविशालं तु षट्भागं विभजेत्समम्
प्राग्वत् कूटं च कोष्ठं च पञ्जरं च प्रकल्पयेत्  १७
तदूर्ध्वभूमिविस्तारे त्वनलांशविभाजिते
मध्ये भद्रं तदेकांशं दण्डमास्य विनिर्गतम्  १८
प्रासादस्य तु चोत्सेधे शतभागविभाजिते
युगांशं तदधिष्ठानमष्टांशं चरणायतम्  १९
पादो न वेदभागं तु मञ्चमानमुदाहृतम्
पादोच्चं सार्धसप्तांशं प्रस्तरं सार्धवह्निकम्  २०

धात्वंशं चरणोच्चं तु सपादाग्न्यंशमञ्चकम्
सार्धषट्कमंघ्रितुङ्गं प्रस्तरं चाग्निभागकम् २१
रसांशं पाददीर्घं तु पादो नाग्न्यंशं मञ्चकम्
पादोच्चं सार्धपञ्चांशं सार्धपञ्चांशं मञ्चकम् २२
पादाधिकं तु पञ्चांशं पादस्योत्सेधमुच्यते
सार्धपञ्चांशं मञ्चोच्चं पञ्चांशं पाददैर्घ्यकम् २३
पादाधिकं तु पञ्चांशं मञ्चमानमुदाहृतम्
सत्रिपादयुगांशं तु पाददैर्घ्यमुदाहृतम् २४
प्रस्तरोच्चं द्विभागं तु सार्धवेदांशमंघ्रिकम्
पादो न द्व्यंशं मञ्चं स्यात्पञ्चभागं वितर्दिका २५
कण्ठमत्यर्धभागेन शीर्षकं सार्धवेदकम्
पादहीनद्विभागं तु शिखरे युगनासिका २६
पादं प्रत्यल्पनासाढ्यं नानापादं धरातलम्
अत्यन्तकान्तमित्युक्तं सर्वदेवप्रियावहम् २७
तदेवोन्नतकोष्ठं च नतं वोन्नतसौष्टिकम्
पञ्चशाला तु मध्यस्थशाला दण्डेन नीप्रकम् २८
अष्टाश्रं शिखरं कण्ठं शिखरं चाष्टनासिकम्
नानालंकारसंयुक्तं चतुष्कूटमिदं परम् २९
तदेव कूटं कोष्ठं च सान्तरप्रस्तरं परम्
कूटकोष्ठादिसर्वाङ्गं समसूत्रमथापि वा ३०
मन्त्रपूतमिति ख्यातं विमानं सार्वकामिकम्
तदेव शिखरं कण्ठं वृत्ताभं परिकल्पयेत् ३१
नात्र कान्तमिति ख्यातं सर्वदेवार्हकं वरम्
तदेव कर्णकण्ठानां शीर्षकं च गळं तथा ३२
वृत्ताकारं प्रकर्तव्यं यत्तदीश्वरकान्तकम्

दशभूभागमाख्यातं ततस्त्वेकादशं तलम् ३३
इति काश्यपशिल्पे दशभूमिविधानं नाम सप्तत्रिंशः पटलः

अथाष्टत्रिंशः पटलः
एकादशभूमिलक्षणम्

अथ वक्ष्ये विशेषेण रुद्रभूमिविधानकम्
प्रासादमानविधिना संग्रहेत्तु ततोदयम् १
तिथ्यंशं विभजेत्तारं गुणांशं गर्भगेहकम्
पक्षांशं गृहपिण्डी स्यादलिंद्रं त्वेकभागकम् २
एकांशं कुड्यविस्तारमलिंद्रं तु शिवांशकम्
हारान्तरमथांशेन कल्पयेत्तु यथाक्रमम् ३
अलिंद्रं वा घनं स्यात्तु घना भित्तिरथापि वा
प्रस्तरान्तं घनं वापि तदूर्ध्वेऽलिंद्रमेव वा ४
विन्याससूत्रयोरन्तर्व्यासे तिथ्यंशभजिते
शिवांशं कर्णकूटंस्यात् पक्षशाला द्विभागिका ५
मध्यशालाग्निभागा स्यादर्धांशं पञ्जरं भवेत्
हारान्तरं च तत्तुल्यं कल्प्यैवं ह्यादिभूतले ६
तदूर्ध्वभूविशालं तु मनुभागविभाजितम्
शिवांशं कूटविस्तारं कोष्ठं तत् द्विगुणायतम् ७
शेषं हारान्तरं ख्यातं त्रिभागैकं तु पञ्जरम्
पञ्जरकूटकोष्ठानां संख्या तु प्राग्वदेव हि ८
तदूर्ध्वभूमिविस्तारे त्रयोदशांशभाजिते
एकांशं कूटविस्तारं कोष्ठं तत् द्विगुणं भवेत् ९
शेषं हारान्तरं ख्यातं त्रिभागैकं तु पञ्जरम्
तदूर्ध्वभूविशाले तु द्वादशांशविभाजिते १०

कूटकोष्ठादिसर्वाङ्गं पूर्ववत्परिकल्पयेत्
तदूर्ध्वभूमिविस्तारे रुद्रांशे तु विभाजिते ११
पञ्जरं कूटं कोष्ठं च प्रागिवैव प्रकल्पयेत्
तस्योर्ध्वभूमिविस्तारे दशभागविभाजिते १२
कूटं कोष्ठं पञ्जरं च संख्यामानं च पूर्ववत्
तदूर्ध्वभूनवांशे तु कूटव्यासं शिवांशकम् १३
अत्यर्धांशं कोष्ठततं शेषं हारान्तरं भवेत्
हारान्तरं त्रिभागैकं पञ्जरव्यासमुच्यते १४
प्राग्वत्कूटादिसंख्याः स्युः कल्पयेत्कल्पवित्तमः
अष्टांशं विभजेदष्टभूमेश्चैव तु विस्तरम् १५
कूटविस्तारमेकांशं मध्ये शाला द्विभागकम्
पञ्जरव्यासमेकांशं हारान्तरं तदर्धकम् १६
चतुष्कूटं चतुश्शालं पञ्जराष्टकसंयुतम्
हारान्तरं कलासंख्यं प्रोच्यतेऽष्टतले द्विति १७
नवभूमिविशालं तु सप्तधा विभजेत्समम्
कूटव्यासमथांशं तु कोष्ठदीर्घं द्विभागकम् १८
शेषं हारान्तरं ख्यातं तत्त्रिभागं तु पञ्जरम्
दशभूमिविशालं तु रसभागविभाजितम् १९
प्राग्वत्कूटं च कोष्ठं च पञ्जरं च प्रकल्पयेत्
एकादिपञ्चभूम्यन्तं भद्रपञ्जरसंयुतम् २०
पञ्जरं भूपरिष्ठात्तु भद्रं वाऽभद्रकं तु वा
ऊर्ध्वभूमिविशालं तु गुणभागविभाजितम् २१
मध्यभद्रं तदेकांशं दण्डमानेन निर्गतिः
प्रासादस्य तु चोत्सेधं शतांशं च त्रयोदश २२
कृत्वा सार्धं युगांशं तु धरा तलमुदाहृतम्

पादोच्चं सार्धवस्वंशं मञ्चमानं युगांशकम्  २३
वस्वंशं चरणायामं मञ्चं पादो न वेदकं
चरणं सार्धसप्तांशं प्रस्तरं सार्धवह्निकम्  २४
सप्तांशं पाददीर्घं तु सपादाग्न्यंशमञ्चकम्
अर्धाधिकषडंशं तु पादमग्न्यंशमञ्चकम्  २५
षडंशं पादतुङ्गं तु पादो न त्र्यंशमञ्चकम्
सत्रिपादं तु भूतांशं पाददीर्घमुदाहृतम्  २६
अर्धाधिकद्विभागं तु प्रस्तरस्योदयं भवेत्
सपादपञ्चभागं तु पादोदयमुदाहृतम्  २७
सार्धपञ्चांशं मञ्चोच्चं भूतांशं चरणोदयम्
सपादपञ्चभागं तु मञ्चमानमुदाहृतम्  २८
पादो न पञ्चभागं तु चरणोदयमीरितम्
मञ्चमानं द्विभागं स्यात् सार्धवेदांशमंघ्रिकम्  २९
सत्रिपादशिवांशं तु प्रस्तरोच्चमुदाहृतम्
वस्वंशं वेदिकामानं कराठोच्चं सार्धभागकम्  ३०
अर्धाधिकं तु वेदांशं शिखरोदयमीरितम्
पादोनं तु द्विभागं स्यात् स्तूपेरुदयमिष्यते  ३१
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत्
शिखरं तु चतुर्दिक्षु महानासी समन्वितम्  ३२
पादं प्रत्यल्पनासाढ्यं ब्रह्मकान्तं तदुच्यते
सौष्टिकं सान्तरं मञ्चं विजयं तदुदाहृतम्  ३३
तदेव नतकूटं चानन्तकोष्ठाः समञ्चकाः
सर्वार्हकमिदं ख्यातं सर्वदेवार्हकं परम्  ३४
तदेव शिखरं कराठं वृत्तमष्टाश्रवेदिकम्
इंद्रकान्तमिति ख्यातं सर्वदेवार्हकं वरम्  ३५

तदेव मध्यभद्राढ्यं कूटकोष्ठौ समौ ततौ
समञ्चं वा विमञ्चं वा कूटशाला च पञ्जरम् ३६
गणिका शालकं ख्यातं ब्रह्मविष्णुशिवार्हकम्
तदेव कर्णकूटं तु भद्रयुक्कर्णकूटकम् ३७
तदेव सौष्टिकानां तु शीर्षकं मण्डलाकृति
नाम्ना कर्णविशालं तु सर्वदेवप्रियावहम्
एवमेकादशतललक्षणं परिकीर्तितम् ३८
इति काश्यपशिल्पे रुद्रभूमिविधानं नाम अष्टत्रिंशः पटलः

## अथैकोनचत्वारिंशः पटलः
### भानुभूमिविधिः

अथ वक्ष्ये विशेषेण भानुभूमिविधिं परम्
हर्म्यविस्तारं तुङ्गं च प्रोक्तं प्रासादमानवत् १
ससप्तधर्मभागं तु कृत्वा प्रासादविस्तरम्
तदेव सौष्टिकानां तु शीर्षकं कुण्डलाकृति २
भूतांशं गर्भगेहं तु पक्षांशं गृहपिण्डिका
अलिंद्रं त्वेकभागेन कुड्यमर्धांशमानतः ३
अलिंद्रं तु शिवांशं तु द्वारं भागेन कल्पयेत्
अथवा गर्भगेहं तु गुणांशेनैव कारयेत् ४
गर्भगेहस्य तुल्यं स्याद्गृहपिण्ड्यास्तु विस्तृतम्
शेषं प्रागिव कर्तव्यमलिंद्रं कुड्यहारकम् ५
विन्याससूत्रयोरन्तस्सप्तदशविभाजिते
गुणांशं मध्यशाला स्यात्कर्णकूटं शिवांशकम् ६
तयोर्मध्ये तु पक्षांशं शालादिव्यमुदाहृतम्
कूटकोष्ठान्तरे चैव कोष्ठयोरन्तरेऽपि च ७

शिवांशं पञ्जरव्यासं कर्णकूटमिवाकृतिः
हारान्तरं तदूर्ध्वांशं क्षुद्रपञ्जरसंयुतम् ८
एवमादितलं कुर्यात् ऊर्ध्वं रुद्रतलोक्तवत्
सप्तविंशतिभागं तु कृत्वा हर्म्योदयं द्विज ९
धरा तलोच्चं भूतांशं नवांशं चरणोदयम्
सार्धवेदांशं मञ्चोच्चं शेषं रुद्रतलोक्तवत् १०
एवं भानुतलं प्रोक्तं त्रयोदशतलं शृणु ११
इति काश्यपशिल्पे भानुभूमिविधानं नाम एकोनचत्वारिंशः पटलः

अथ चत्वारिंशः पटलः

त्रयोदशभूविधिः

अथ वक्ष्ये विशेषेण त्रयोदश तलं परं
तस्य विस्तारमानं तु प्रासादमानवत् भवेत् १
एकोनविंशदंशं तु कर्तव्यं सदनं ततम्
गुणांशं गर्भगेहं तु पक्षांशं गृहपिण्डिका २
अलिंद्रं च शिवांशं स्यात् भित्तिः स्यादुन्नतं समम्
अलिंद्रं त्वेकभागेन भित्तिव्यासं शिवांशकम् ३
व्योमभागमलिंद्रं स्यात् धराव्यासं च तत्समम्
विन्याससूत्रयोरन्तरेकोनविंशदंशके ४
शिवांशं कर्णकूटं स्यान्मध्ये शालाऽग्निभागकम्
पक्षशाला च तत्तुल्यमेकांशं पञ्जरस्य तु ५
हारान्तरमथार्धांशं क्षुद्रपञ्जरसंयुतम्
पञ्जरं कर्णकूटाभं तदाभं क्षुद्रपञ्जरम् ६
एवमादितलं प्रोक्तमूर्ध्वं भानुतलोक्तवत्
चत्वारिंशत् द्व्याधिक्ये शतांशे सदनोदये ७

पञ्चांशं तदधिष्ठानं दशांशं चरणोदयम्
भूतांशं मञ्चमानं स्यात् शेषं द्वादशभूमिवत् ८
त्रयोदशतलं ह्येवं कलाभूमिमथोपरि ९
इति काश्यपशिल्पे त्रयोदशभूमिविधानं नाम चत्वारिंशः पटलः

## अथैकचत्वारिंशः पटलः

### षोडशभूमिविधिः

अथ षोडशभूमिस्तु वक्ष्यते देशिकोत्तम
एवं क्रमेण संकल्प्य पञ्चालिंद्रसमन्वितम् १
पञ्चहारसमायुक्तं गृहपिण्डे समानकम्
गर्भगेहं समांशं च वेदांशं गृहपिण्डिका २
शेषं पूर्ववदुद्दिष्टमळिंद्रादि द्विजोत्तम
एकद्वित्रिचतुष्पञ्चभूमौ वाथ धरातले ३
देवतास्थापनं कुर्यात् षोडशस्थलहर्म्यके
देवतास्थापने भूमिर्यावत् तावत् घनं कुरु ४
बाह्यांद्रचिदलंकारं घनमत्यन्तरं कुरु
अलिंद्रजलतत्वादाच्छादितं वा तुलादिभिः ५
प्रस्तरान्तर्घनं वाथ भ्रान्तं वा स्यात्तु तद्घनम्
व्यासे सवेदत्रिंशांशे कर्णकूटं शिवांशकम् ६
हर्म्यमध्ये तु वेदांशं शालायाममुदाहृतम्
तयोर्मध्ये तु पद्मांशे कोष्ठं तु परिकल्पयेत् ७
तयोर्मध्ये शिवांशेन पञ्जरं कर्णकूटवत्
हारान्तरं तयोर्मध्ये अर्धांशेनैव कल्पयेत् ८
एवं हि कल्पयेदादिभूमौ शालाष्टविंशतिः
कर्णकूटं तु वेदासु द्वात्रिंशत् पञ्जरं भवेत् ९

सवेदषष्टिसंख्याः स्युः हारान्तरं द्विजोत्तम
एवमादितलं ख्यातं तद्धि द्वात्रिंशदंशके १०
द्विभागं मध्यशाला स्यात् शेषं पूर्ववदाचरेत्
द्वितीयं ह्येवमाख्यातं तृतीयमधुनोच्यते ११
त्रिंशदंशविभागं च कृत्वा मानं त्रिभूमिकम्
कर्णकूटस्य पार्श्वस्थं पञ्जरं त्र्यर्धभागकम् १२
हारान्तरं तदर्धं स्यात् शेषं द्वितीयभूमिवत्
चतुर्भूमिविशालं तु अष्टाविंशतिभागकम् १३
कर्णकूटसमीपस्थशालायाश्च द्विपार्श्वयोः
एकांशं पञ्जरव्यासं शेषं प्रागिव कल्पितम् १४
पञ्चमे तलविस्तारे षाड्विंशत्यंशभाजिते
मध्ये शाला तु वेदांशं व्योमांशं कर्णकूटकम् १५
तयोर्मध्यस्थशाला च तयोर्मध्ये च कोष्ठकम्
प्रत्येकं च द्विभागेन कल्पयेत्कल्पवित्तमः १६
तयोर्मध्येऽर्धभागेन पञ्जरं कर्णकूटकम्
हारान्तरं तदर्धेन तेषां संख्यादिभूमिवत् १७
षष्ठभूमेस्तु विस्तारे चतुर्विंशति भाजिते
मध्ये कोष्ठं द्विभागेन शेषं पूर्ववदेव हि १८
सप्तभूमेस्तु विस्तारं द्वाविंशत्यंशकं भवेत्
शिवांशं कर्णकूटं तु मध्यशालाद्विभागकम् १९
तयोर्मध्ये शिवांशेन क्षुद्रकूटं प्रकल्पयेत्
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् २०
अर्धांशं पञ्जरव्यासं तदर्धं हारमन्तरम्
पञ्जरकूटकोष्ठानां संख्या वै प्रागिवैव तु २१
अष्टभूमेस्तु विस्तारे विंशदंशविभाजिते

व्योमांशं कर्णकूटं स्यात् मध्ये कोष्ठं द्विभागकम्  २२
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम्
अर्धांशं पञ्जरव्यासं तदर्धं हारमन्तरं  २३
तयोर्मध्ये शिवांशेन क्षुद्रकोष्ठं प्रकल्पयेत्
पञ्जरकूटकोष्ठानां संख्या स्यात् प्रागिवैव तु  २४
शेषं प्रागिव कर्तव्यं तेषां संख्यादिपूर्ववत्
नवभूमिविशाले तु त्रिषडंशविभाजिते  २५
शिवांशं कर्णकूटं स्यात् मध्येशाला द्विभागकम्
तयोर्मध्येऽर्धभागेन पञ्जरं परिकल्पयेत्  २६
तस्यार्धेनैव तत्पार्श्वे तयोर्हारान्तरं भवेत्
तत्पार्श्वयोर्द्विभागं तु कोष्ठं कुर्याद्विशेषतः  २७
कूटकोष्ठान्तरे चैव कोष्ठयोरन्तरेऽपि च
पञ्जरं कल्पयेत् धीमान् अर्धांशेनैव सुव्रत  २८
हारान्तरं तदर्धांशं कल्पयेत्कल्पवित्तमः
विंशत् कोष्ठं चतुष्कूटं पञ्जरं भानुभिर्युतम्  २९
कल्प्यं च नवभूमौ तु दशभूमिरथोच्यते
दशभूमेस्तु विस्तारे षोडशांशविभाजिते  ३०
कर्णकूटं शिवांशं स्यात्तत्समं पञ्जरं ततम्
शालायामं द्विभागं स्यादर्धांशं हारमन्तरम्  ३१
भानुशाला चतुष्कूटं कलापञ्जरसंयुतम्
हारान्तरं तु द्वात्रिंशत् कल्पयेद्दशमे तले  ३२
एकादशतलव्यासे मनुभागविभाजिते
शिवांशं कर्णकूटं तु मध्येशाला द्विभागकम्  ३३
तयोर्मध्यस्थशालानां गुणांशं परिकल्पयेत्
अर्धांशं पञ्जरव्यासं तदर्धं हारमन्तरम्  ३४

चतुष्कूटमर्कशालं पञ्जरैष्षोडशैर्युतम्
हारान्तरं च द्वात्रिंशत् कल्प्यं रुद्रतलेऽपि च ३५
भानुभूमिविशाले तु भानुभागविभाजिते
पञ्जरकूटकोष्ठानां संख्या रुद्रतलोक्तवत् ३६
सर्वेषामपि कोष्ठानां पद्मांशं प्रविधीयते
त्रयोदशतलव्यासं दशभागविभाजितम् ३७
कर्णकूटं शिवांशं तु मध्यशाला द्विभागकम्
तयोर्मध्येऽर्धभागेन पञ्जरं कर्णकूटवत् ३८
हारान्तरं च तस्यार्धं संख्या द्वादशभूमिवत्
चतुर्दशतलव्यासे वसुभागविभाजिते ३९
शिवांशं कर्णकूटं स्यान्मध्ये शाला द्विभागकम्
अर्धांशं पञ्जरव्यासं तदर्धं हारमन्तरम् ४०
चतुष्कूटं चतुश्शालं पञ्जरषोडशान्वितम्
हारान्तरं चतुर्विंशत् कल्प्यं मनुतलं भवेत् ४१
त्रिःपञ्चभूमिविस्तारं षट्भागं विभजेत् समम्
कर्णकूटं तु व्योमांशं मध्यशाला द्विभागकम् ४२
हारान्तरं तु शश्यंशं युग्मपंजरसंयुतम्
अशेषोर्ध्वतलव्यासे वेदभागविभाजिते ४३
द्विभागविस्तृतं दण्डमानं नीप्रं तु मध्यमे
कृत्वा प्रासादतुङ्गं तु द्विशतं तु विभागकम् ४४
धरातलं तु सप्तांशं चरणं च त्रयोदशम्
सार्धपञ्च तु मञ्चोच्चं पादोच्चं भानुसंख्यकम् ४५
प्रस्तरोच्चं तु षट्भागं रुद्रांशं चरणोदयम्
सार्धभूतांशं मञ्चं स्यात् दशांशं चरणोदयम् ४६
भूतांशं मञ्चमानं तु नवांशं चरणोदयम्

सार्धवेदांशं मञ्चोच्चं कल्पयेत् कल्पवित्तमः ४७
पादोच्चं सार्धवस्वंशं मञ्चमानं युगांशकम्
वस्वंशं चरणोच्चं तु मञ्चमानं युगांशकम् ४८
चरणं सार्धसप्तांशं प्रस्तरं सार्धवह्निकम्
सप्तांशं पाददीर्घं तु सपादाग्न्यंशं मञ्चकम् ४९
अर्धाधिकं षडंशं तु पादोच्चाग्निस्तु मञ्चकम्
षडंशं पादमानं तु पादो नाग्न्यंशं मञ्चकम् ५०
अर्धाधिकं तु भूतांशं पाददैर्घ्यमुदाहृतम्
अर्धाधिकं द्विभागं तु प्रस्तरस्योदयं भवेत् ५१
सपादपञ्चभागं तु पाददीर्घमुदाहृतम्
सार्धपद्मांशं मञ्चोच्चं भूतांशं चरणोदयम् ५२
सपादपद्मभागं तु मञ्चमानमुदीरितम्
पादोनपञ्चभागं तु चरणोदयमीरितम् ५३
मञ्चमानं द्विभागं स्यात्सार्धं वेदांशमंघ्रिकम्
सत्रिपादशिवांशं तु प्रस्तरस्य समुच्छ्रयम् ५४
शश्यंशं वेदिकामानं कण्ठोच्चं तु द्विभागकम्
अर्धाधिकयुगांशं तु शिखरोदयमीरितम् ५५
सपादांशं शिखामानं कल्पयेत्तु क्रमेण च
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ५६
शिखरं तु चतुर्दिक्षु महानासी समन्वितम्
पादं प्रत्यल्पनासाढ्यं ब्रह्मकान्तमुदाहृतम् ५७
तदेव सोन्नतं मञ्चं सौष्टिकोन्नतकोष्ठकम्
सारस्वतमिति ख्यातं शिवप्रियकरं गृहम् ५८
तदेव नतकूटं च कोष्ठोन्नतं समञ्चकम्
प्रादेशमिति विख्यातं सर्वसमृद्धिकारणम् ५९

तदेव शिखरं कराठवस्वश्रं परिकल्पयेत्
शिखरेऽष्टमहानासी युक्तं तत् श्रीकरं भवेत् ६०
तदेव मध्यभद्राढ्यं कूटकोष्ठौ समान्नतौ
समञ्चावाऽप्यमञ्चा वा कूटशाला द्विजोत्तम ६१
पार्वती कान्तमाख्यातं मम प्रीतिकरं भवेत्
तदेव शिखरं कराठं वृत्तमष्टाश्रवेदिकम् ६२
वेदिका चैव वृत्ता वा वृत्ताकारघटापि वा
सुशांभवमिदं ख्यातं शंकरस्य प्रियावहम् ६३
पञ्जरं कूटं कोष्ठं च शिखरं च घटं तथा
एवमादीनि सर्वाणि नागराद्युचितं कुरु ६४
अनेनैवाथवा कुर्यात् एकानेकादिभूमयः
यत्नलम्भेषु कर्तव्यं तलं तस्यादिपञ्चकम् ६५
तत्तलस्योचितव्यासं तुङ्गकुड्यं च गर्भकम्
कर्तव्यं विधिना तेन गराडालंकारसंयुतम् ६६
सालिंद्रं सदनार्थं तु सोपानं रोहणाय वै
तत्र तत्रोचितं कुर्यात् शालाभिष्वेकताद्रुमे ६७
तस्याग्रे मराडपं कुर्यात् एकानेकतलं तु वा
प्रागुक्तविधिना कुर्यात् सर्वालंकारसंयुतम् ६८
करालमुद्गीकुल्माषकल्कचिक्कणकर्मकृत्
नानाचित्रैर्विचित्रं तु कर्तव्यं विधिनोचितम् ६९
एवं यः कुरुते हर्म्यं स्वशक्त्या प्रोक्तवत्तु वा
इहैव धनवान् श्रीमान् पुत्रपौत्रकळत्रकैः ७०
दासीदासादिभिश्चान्यैः स्वेच्छावंशो मुदायुतः
सोनककुलजातं च पावयेत् तुमुदा चना ७१

इति काश्यपशिल्पे षोडशभूमिविधानं नाम एकचत्वारिंशः पटलः

# अथ द्विचत्वारिंशः पटलः

## मूर्धेष्टकाविधानम्

अथ वक्ष्ये विशेषेण मूर्धेष्टकाविधिं परम्
शिखरस्योदयार्धान्ते महानास्यवसानके १
शक्तिध्वजावसाने वा मूर्धेष्टकां च विन्यसेत्
यावत् यदा समाप्तं तु तदामूर्धेष्टकां न्यसेत् २
एकाद्यनेकभूम्यन्तहर्म्याणां तु विशेषतः
इष्टका व्यासमायामं घनं चाद्येष्टकामिव ३
प्रासादस्याग्रतो देशे सौम्ये वायौ च गोपुरे
नवाष्टसप्तषट्पञ्चहस्तं वा मण्डपं ततम् ४
तद्विस्तारसमायामं चतुरश्रं समं कुरु
मण्डपं वा प्रपा वाथ षोडशस्तंभसंयुतम् ५
चतुर्द्वारसमायुक्तं चतुस्तोरणसंयुतम्
षडष्टनवसंख्याकवितानध्वजसंयुतम् ६
मुक्तास्रग्दर्भमालाभिरलंकृत्य विशेषतः
मण्डपस्य त्रिभागैकां मध्ये कृत्वा तु वेदिकाम् ७
वेदांगुलोन्नतां देशमुपवेदियुगत्रयम्
शेषं वेदिविशालं तु भानुमात्रं तदुन्नतम् ८
भानुद्वयांगुलोच्चं वा दर्पणोदरसन्निभम्
इह चाग्निकुण्डानि चतुरश्राणि कल्पयेत् ९
अथवा वालुकैः स्थूलैः वेदिकां कल्पयेत् बुधः
स्थण्डिलं कारणैर्दद्यादष्टद्रोणैश्च शालिभिः १०
तदर्धैस्तण्डुलैस्तुभ्यं तदर्धैश्च तिलैरपि
लाजैश्चैव परिस्तीर्य श्वेताब्जं परिकल्पयेत् ११
नानापुष्पैः कुशैर्दर्भैः परिस्तीर्य विचक्षणः

मनोन्मनीं कर्णिकायां दळेषु व्योमादिशक्तयः १२
गन्धपुष्पादिभिः यष्ट्वा सस्यमात्रैर्विशेषतः
लोहजं दारुजं वाथ स्तूपिदण्डं च कारयेत् १३
आसनं खादिरं वाथ तिन्तिणी सारमेव वा
मयूरं पद्मकण्डूरं भवेत्तद्दारुवत्ततं १४
हेममुदितं ताम्रं वा त्रयसंमिश्रमेव वा
ऊर्ध्वभूम्यग्नितुङ्गं तु स्तूपिदण्डायतं भवेत् १५
मूर्धशिलोपरिष्टात्तु स्तूप्यन्तं वा तदायतम्
ऊर्ध्वभूमेश्च विस्तारं स्तूपिमूलविशालकम् १६
तस्याग्रमंगुलव्यासं मूलात् दारुक्रमात् कृशम्
तुंगाणात्समंशं तु मूलेवेदाश्रमाचरेत् १७
वंशमध्यसमं त्वग्रे वृत्ताकारं प्रकल्पयेत्
चतुरश्रोपरिष्टात्तु सर्वं वृत्तमथापि वा १८
कर्तव्यं तस्य मूले तु शिखां चाप्यथ योजयेत्
दण्डमूलसमव्यासं दण्डं दण्डाग्रयोरपि १९
एवमाकारयुक्तं तु योजयेल्लोहजं बुधः
प्रक्षाळ्य पञ्चगव्यैस्तु दण्डं चैवेष्टका अपि २०
कर्णिकायां न्यसेत् दण्डं क्रमादेव महादिशि
चतस्रस्त्विष्टकाः स्थाप्याः शिला विष्टंभकैर्जलैः २१
पृथिव्यादिपरीजानि दण्डं तु विलिखेत् बुधः
प्रागादिदिक्क्रमात् दर्भगन्धपुष्पादिभिर्यजेत् २२
सौवर्णैः राजतैस्ताम्रैः सूत्रैः कार्पासतैस्तु वा
कौतुकं बन्धयेद्विप्रः स्वस्वबीजमनुस्मरन् २३
ब्रह्माणं विष्णुं रुद्रं च ईश्वरं च सदाशिवम्
इष्टकासु च दण्डे च अधिदेवान्क्रमात् न्यसेत् २४

नैवेद्यं दापयेदेषां तांबूलं च निवेदयेत्
प्रत्येकं नववस्त्रेणाच्छादयेत्कूर्चसंयुतम् २५
अभितः कलशानष्टौ सकूर्चान्सापिधानकान्
गन्धांबुपूरितान्वस्त्रहेमपुष्पसमन्वितान् २६
फलपल्लवसंयुक्तान् अष्टौ विश्वेश्वराधिपान्
संस्थाप्य स्वस्वमन्त्रेण नैवेद्यान्तं समर्चयेत् २७
ततो होमः प्रकर्तव्यः अग्न्याधानादिपूर्वकम्
समिदाज्य चरून्लाजान्सद्यादिभिर्हुनेत् बुधः २८
शतं वाथ शतार्धं वा प्रत्येकं जुहुयात् क्रमात्
परब्रह्मषडंगैश्च त्त्रुरिकाबीजमुख्यकैः २९
आज्येन जुहुयत् धीमान्प्रत्येकं पञ्चविंशतिम्
जयाद्यैरभ्यातानैश्च राष्ट्रभृद्भिश्च होमयेत् ३०
ब्रह्मादिबीजमन्त्रैस्तु हुत्वाऽऽज्यैश्च तथाहुतीः
कृत्वा जागरणं रात्रौ प्रभाते विमले शुभे ३१
आचार्यः शिल्पिभिस्सार्धं स्नानं कृत्वा विधानतः
नववस्त्रोष्णीषधरः भस्मरुद्राक्षधारकः ३२
नवयज्ञोपरीताढ्यः सितमाल्यानुलेपतः
हेमांगुलीयकटककुण्डलाद्यैरलंकृतः ३३
यज्ञसूत्रादिसंयुक्तं भूषणैर्भूष्य शिल्पितम्
आचार्या मण्डपं गत्वा दण्डेनापीष्टकाश्च ताः ३४
गन्धपुष्पादिभिः पूज्य होमं कृत्वा जयादिभिः
स्विष्टमग्नेतिमन्त्रेण पूर्णाहुतिं समाचरेत् ३५
स्थिरराश्युदये वाप्युभयराश्युदयेऽपि वा
मीने वा शुक्रसंयुक्ते तथादृष्टेथवा पुनः ३६
आचार्यः शिल्पिभिश्चैव नेह्यन्तौ नुग्रहोपरि

पुरायाहवाचनं कृत्वा मूर्धेष्टका निधापयेत् ३७
इष्टकाः स्तूपिकल्प्याश्च बाह्यधामप्रदक्षिणम्
नानालंकारसंयुक्ताः कृत्वा हर्म्येनुलेपयेत् ३८
उत्तराभिमुखो भूत्वा आचार्योऽनन्यचेतसा
ब्रह्माणं विष्णुं रुद्रं च ईश्वरं च सदाशिवम् ३९
विचिन्त्य स्वस्वमन्त्रैस्तु चतस्रस्त्विष्टका न्यसेत्
पृथिव्यात्मकं क्रमं तु सौम्याग्रं शांकरेषु च ४०
सुषे स्थाने मयाश्रित्य प्रागग्रं त्वंभसात्मकम्
सुषे नैर्ऋत्यमाश्रित्य सौम्याग्रं सलिलात्मकम् ४१
सुषे वायव्यमाश्रित्य प्रागग्रं मरुतात्मकम्
क्रमात् न्यस्येष्टकास्त्वेवं सुनिच्छिद्रं समाचरेत् ४२
माणिक्यं चमरतकं वैडूर्यं त्विंद्रनीलकम्
मौक्तिकं स्फाटिकं चैव पद्मरागं प्रवाळकम् ४३
वज्रं मध्ये च संस्थाप्य शक्तिबीजमनुस्मरन्
तदूर्ध्वे स्थापयेत्स्तूपिदराडमीशानमंत्रतः ४४
कलशस्थोदकैः प्रोक्ष्य दराडं चाप्यश्मपञ्चकम्
तत्तन्मूर्तीः समभ्यर्च्य गन्धैः पुष्पैश्च धूपकैः ४५
गलांभसा च सुदृढं स्थापयेद्वास्तुनिश्चलम्
ततोपशिष्टं शिखरं कर्तव्यं चोदितं मया ४६
शिखरोपरिस्तूपिं च प्रागुक्तविधिना कुरु
करालमुद्गीमुख्यैस्तत्कुर्यात्तु निश्चलं दृढम् ४७
स्वर्णैर्वा रजतैर्वाथ ताम्रैर्वाच्छादयेत् गृहम्
कृतार्थे गां च भूमिं च आचार्याय प्रदापयेत् ४८
दक्षिणां दापयेत्तस्मै दशनिष्कं हिरगमयम्
यागोपकरणं सर्वमाचार्याय च दापयेत् ४९

शिल्पिनः पूजयेत्पश्चात् गोभूमिकाञ्चनादिभिः
एवं यः कुरुते मर्त्यः स याति शुभदं फलम्  ५०
इति काश्यपशिल्पे मूर्धेष्टकाविधानं नाम द्विचत्वारिंशः पटलः

## अथ त्रिचत्वारिंशः पटलः
## प्राकारलक्षणम्

अथ वक्ष्ये विशेषेण प्राकाराणां च लक्षणम्
रक्षार्थं शोभनार्थं च शालायाः सदनस्य च  १
प्राकारस्य विशालार्थं गुणभागैकमेव वा
चतुर्भागैकभागं वा अन्तर्मण्डलविस्तृतम्  २
अन्तर्हारविशालं तु तद्बाह्ये द्विगुणं हि तत्
मध्यहारविशालं तु बाह्यान्तं मण्डलत्रयम्  ३
मध्यादेस्तु विशालं तु तद्बाह्ये तु चतुर्गुणम्
महामर्यादाविस्तारं आर्द्रैः पञ्चगुणं भवेत्  ४
प्रासादचरणाद्विप्र होमा द्वा प्रथमस्य तु
प्रथमात् द्वितीयनीप्रं तु द्वितीयात्तृतीयनीप्रकम्  ५
तृतीयात् चतुर्थं निष्क्रान्तं तस्मात् नीप्रं च पञ्चमम्
प्राकारं प्रतिनिष्क्रान्तं तस्मात् नीप्रं तु पञ्चमं  ६
कुड्यमध्यावसानं वा कुड्यबाह्यमथापि वा
अथवा शेषविप्राणां नीप्रं होमाद्विधीयते  ७
प्रथमं प्रकृतेस्तुल्यं तस्मात् गुणांगुलं नतम्
द्वितीयाद्यं तु पञ्चान्तं तद्वदेव नतं क्रमात्  ८
कल्प्यं वै हर्म्यमानेन हस्तमानमथोच्यते
त्रिपञ्चसप्तहस्तेन प्रथमं त्रिविधं भवेत्  ९
नवैकादशहस्तं च त्रयोदशं द्वितीयकम्

त्रिपञ्चसप्तदशहस्तमेकोनविंशतिः १०
मध्यहारं त्रिधा प्रोक्तं मर्यादास्तु ततः शृणु
एकविंशत्रयोविंशपञ्चविंशकरं भवेत् ११
सप्तविंश नवविंश एकत्रिंशत् करेण तु
महामर्यादाविस्तारमेवं त्रिविधमुच्यते १२
एवमाभासहर्म्याणां विकल्पानां च कल्पयेत्
सप्तहस्तं समारभ्य पञ्चत्रिंशावसानकम् १३
प्रत्येकं प्रथमादीनां सालानां त्रित्रिमानकम्
त्रिपञ्चसंख्यया प्रोक्तं हर्म्याणां चंद्रसंख्यया १४
नवहस्तं समारभ्य हस्तत्रिंशावसानकम्
प्राग्वै सालमाख्यातं हर्म्याणां जातिसंज्ञके १५
प्रागुक्तहर्म्यमानैश्च शालाद्यन्त्यं च संमतम्
पञ्चप्राकारमेवं हि त्रिप्राकारमथोच्यते १६
द्वितीयं तृतीयसालं च चतुर्थं च प्रगृह्यताम्
यत्र यद्विहितं सालं हर्म्यवृत्तं तु लक्षयेत् १७
तस्यामुखे मुखायामं कल्पयेत्कल्पवित्तमः
बीजात्पादबीजं त्वर्धं त्रिपादं च समं तु वा १८
द्विगुणं त्रिगुणं वाथ चतुःपञ्चगुणं तु वा
कल्पयेत्तु मुखायामं बीजमूर्ध्वं द्विजोत्तम १९
अन्तर्मण्डलभित्तेस्तु विस्तारोव्योमहस्तकः
तस्मात्त्रिमात्रवृद्ध्या वा षण्मात्रं वाथ वर्धयेत् २०
सार्धहस्तं द्विहस्तं तु महामध्यावसानकम्
भित्तिव्यासं समाख्यातमुत्सेधं शृणु सुव्रत २१
तद्व्यासत्रिचतुष्पञ्चगुणं वा सालतुङ्गकम्
अथवोत्तरसीमान्तं नीप्रान्तं वाजनान्तकम् २२

प्रस्तरेषु गलो वाथ सालतुङ्गमुदाहृतम्
ऋजुबीजतलोपेतं बाह्ये त्वभ्यन्तरार्जवम् २३
कुड्यमूलस्य विस्तारवस्वंशो नाग्रविस्तरम्
मूलादाग्रं क्रमात् क्षीणं वस्वंशांशे द्विजोत्तम २४
अथवा हस्तमानेन सालोत्सेधं वदाम्यहम्
प्रथमं कलशान्तं तु द्वितीयं फलकान्वितं २५
बोध्यन्तं स्यात्तृतीयं तु चतुर्थं मञ्चकान्तकम्
पञ्चमं तु कपोतान्तं पञ्चसालोदयं क्रमात् २६
एतद्धि पञ्चसालेषु तेषामुक्तो ह्ययं विधिः
आवृतं मालिका वा स्यात् सहकारमथापि वा २७
मण्डपाकृतिकं वाथ ऋजुमध्यमथापि वा
भूतवेदगुणं पक्षव्योमभूममथोच्यते २८
कुड्यस्योपरि कुड्यं स्यात्पादं पादोपरि न्यसेत्
तलं प्रतितलं कुर्यात्पादं प्रत्यल्पनासिका २९
वक्ष्येऽहं पादमानं च पङ्क्तिमानं द्विजोत्तम
मूलहर्म्ये तु होमादि उत्तरान्तं यदुन्नतम् ३०
तन्मानं सप्तधाभज्य पक्षांशं तु धरातलम्
पञ्चांशं पाददीर्घं तु पादं सव्यांगसंयुतम् ३१
धरातलं तदुक्तं वा ह्युर्जमं वा प्रकल्पयेत्
मूलहर्म्ये तु होमादि उत्तरांशं नवांशके ३२
धरातलं द्विभागं स्यात्सप्तांशं चरणोदयम्
उत्तरान्तं तु होमादि रुद्रभागविभाजिते ३३
अधिष्ठानं गुणांशं स्यात् शेषं पादोदयं भवेत्
मूलप्रासादतुल्यं वा चरणं च धरातलम् ३४
पादोत्सेधांशमानं तु षट्सप्ताष्टौ तु वा भजेत्

एकांशं पादविष्कंभं दारुवाऽश्ममयं तु वा ३५
तत्त्रिभागं द्विभागं वा त्रिपादं वार्ध एव वा
कुड्यपादस्य विस्तारं सर्वत्र परिकल्पयेत् ३६
त्रिचतुष्पञ्चहस्तं वा परितो मालिकाकृति
हस्तद्वयं समारभ्य पञ्चहस्तावसानकम् ३७
गुणांगुलप्रवृद्ध्या च पङ्क्त्यायां पञ्चविंशतिः
भेदेन कथितं विप्र सर्वत्र समपङ्क्तयः ३८
युग्मायुग्माथवा पङ्क्तिः सर्वत्र परिकल्पयेत्
मूलभागविशालं तु धर्मनन्दाष्टभाजिते ३९
एकांश रहिताग्रं स्यात् मूलादाग्रं क्रमात् कृशम्
अग्रपादं विशालं तु दण्ड इत्यभिधीयते ४०
दण्डं त्रिपादमर्धं च क्रमात् श्रेष्ठान्तराधमम्
उत्तरोत्सेधमाख्यातं विस्तारं मूलपादवत् ४१
मध्यपादसमं वाथ अग्रपादसमं तु वा
उत्तरव्यासमाख्यातं श्रेष्ठान्तराधमं क्रमात् ४२
उत्तरोच्च त्रिभागैकं वाजनोत्सेधनीप्रकम्
उत्तरोत्सेधतुल्यं तु तुलानीप्रमुदाहृतम् ४३
तदर्धं वा त्रिपादं वा तस्य विस्तारमेव हि
वाजने गुल्मकोर्ध्वे वा तुलास्थापनमाचरेत् ४४
तुलार्धं नीप्रविस्तारं जयन्तस्य तुलोपरि
जयन्तार्धविशालोच्चमनुमार्गमुदाहृतम् ४५
तुलान्तरं तुलोच्चं तु जयन्त्याश्च तदन्तरम्
अनुमार्गं तथा कल्प्यं दण्डमानेष्टकान्तरम् ४६
कपोतादीनि नीप्रान्तं प्रस्तरोक्तवदाचरेत्
अथवा तुलोपरिष्टात्तु इष्टकास्तरणं कुरु ४७

सुधया गुडतो यैश्च इष्टकास्तरणं भवेत्
कराळमुद्गगुल्माषकल्कचिक्कणमाचरेत्  ४८
इष्टकास्तरणं ह्येतच्छिला चेन्दुतलोपरि
शैलजोत्पलकाभिश्च छादयेत्तु विशेषतः  ४९
वाजनोर्ध्वे तु वासाद्य सुधाकर्मसमाचरेत्
एवमादितलं प्रोक्तमूर्ध्वभूमिं वदाम्यहम्  ५०
मूलाग्रस्तंभतुङ्गं तु मन्दमूलाष्टभाजिते
एकांशरहितांघ्रिश्च तथैवोर्ध्वोर्ध्वभूमयः  ५१
प्रस्तरं च तथार्धावमेकानेकतलोपि च
प्रसरोपरि कर्तव्यं भित्तिमेव पदोदयम्  ५२
छत्राकारशिरोपेतं सदाकारमथापि वा
गोपानमथवा वाजं सदा कल्प्यान्तरे द्विज  ५३
मृण्मयैः लोष्ठकैर्वाथ सारदारुमयैस्तथा
गोपानछादनं कुर्यात् लुपात्रियाशिरोन्वितम्  ५४
सभाकारमिदं ख्यातं यथेष्टं तेषु कल्पयेत्
जातिः पञ्चतलं ख्यातं छन्दं वेदतलं भवेत्  ५५
विकल्पं त्रितलं विद्यात् आभासं त्वेव भूमिकम्
जात्यादीनां तु हर्म्याणां योग्यं सालतलं कुरु  ५६
मर्यादासालमाश्रित्य पावके पचनालयम्  ५७
नैर्ऋृत्यामायुधस्थानं वायव्येशयनार्हकम्
शांकरे योगशाला स्यात् भृशभागेऽथवा पुनः  ५८
आग्नेययाम्ययोर्मध्ये कर्तव्यं जननालयम्
शक्रशांकरयोर्मध्ये मज्जनालयमेव च  ५९
धान्यस्थानं च तत्पार्श्वे भृंगराजपदेऽपि वा
निर्ऋृतिवरुणयोर्मध्ये पुस्तकारक्षकालयम्  ६०

तत्पार्श्वयोः प्रकर्तव्यं वृज्ञनालयमुत्तमम्
होमवायव्ययोर्मध्ये वस्त्राणामालयं कुरु ६१
सोमशंकरयोर्मध्ये गौर्यावासं प्रकल्पयेत्
तत्पार्श्वे शयनस्थानं पर्यंकेन समन्वितम् ६२
पुष्पदन्तपदे वाथ माहेंद्रे पुष्पमण्डपम्
गृहक्षतपदे कुर्यात् धान्यालयं द्विजोत्तम ६३
परितो मालिकायां च एवमेव प्रकल्पयेत्
मालिकान्ते तु सोमांशे कूपस्थानमुदाहृतम् ६४
अथवाऽन्यप्रकारेण वक्ष्ये संदेशनिर्णयम्
शक्रशांकरयोर्मध्ये विद्यास्थानमुदाहृतम् ६५
शंकाश्रीदयोर्मध्ये धनस्थानमुदाहृतम्
याम्यपादकयोर्मध्ये पुष्पमण्डपमुच्यते ६६
याम्यनैर्ऋतयोर्मध्ये स्नानांबुकोष्ठमुच्यते
निर्ऋतिवारुणयोर्मध्ये धर्मश्रवणमण्डपम् ६७
वायुवारुणयोर्मध्ये आयुधस्थानमुच्यते
वायव्यसौम्ययोर्मध्ये शयनस्थानमुच्यते ६८
ईशानसौम्ययोर्मध्ये यागार्थं मण्डपं कुरु
जयन्ते मज्ञनागारमाग्नेये पचनालयम् ६९
परितो मालिकायां तु सकलस्थानमुच्यते
शांकरे नृत्तमूर्तिस्तु आग्नेय्यां वृषवाहनम् ७०
उमास्कन्दं च सहितं नैर्ऋते परिकल्पयेत्
कंकाळं वायुदिग्भागे भिक्षाटनं जयन्तके ७१
सुखासनं तु सत्यांशे वितथे त्रिपुरान्तकम्
सुग्रीवे हरिअृद्धं स्यात् गन्धर्वे चंद्रशेखरम् ७२
शेषांशे कामदहनं मुख्ये कालारिमूर्तिकम्

उदितेर्धनारिमूर्तिं महेंद्रे कल्याणसुन्दरम् ७३
क्षेत्रपालं तु पर्जन्ये याम्ये वै दक्षिणेश्वरम्
वारुणे लिंगोद्भवं च सौम्ये तु गजहारिणम् ७४
इत्यर्थधर्म ईशांश्च अन्तराळेषु कल्पयेत्
मूलहर्म्यं समीक्ष्यैव सकलस्थापनं कुरु ७५
प्राकारेषु चतुर्दिक्षु द्वारशोभादिकल्पयेत्
प्राकारततमध्ये तु दीर्घमध्येतिवेचनम् ७६
अथवा मूलहर्म्यस्य मध्यसूत्राश्रितं भवेत्
प्रधानद्वारमेकं वा द्वयं वाऽन्यत्तु जालकम् ७७
प्राकारमेवमाख्यातं बाह्ये विधिर्विधीयके
एकद्वित्रिचतुष्पञ्चदण्डं बाह्ये तु विस्तृतम् ७८
तद्बाह्ये तु त्रयः श्रेणीः अनेन विधिना कुरु
शैवानां परिवाराणां प्राच्यामावासमुच्यते ७९
प्राच्यां वा सौम्यदेशे वा देशिकावासमुच्यते
दैवज्ञांबष्ठभिषजां वासस्थानं च याम्यके ८०
निबन्धाहारजावानां पश्चिमे वासमुच्यते
सर्वेषामपि भक्तानां वासमुत्तरपार्श्वके ८१
अग्नौ महाव्रतस्थानं याम्ये पाशुपतालयम्
कालामुखं तु नैर्ऋत्ये चोर्ध्वालयं तु वारुणे ८२
वायौ तु आर्हतस्थानं सौम्ये भूसुरसत्रकम्
ज्ञानाभ्यासादयः कुर्याद्वैश्यानां तु विशेषतः ८३
तद्बाह्ये त्वीशदिग्भागे कार्यं महाजलाशयम्
याम्यपावकयोर्मध्ये गोशालां संप्रकल्पयेत् ८४
वारुणी नैर्ऋती मध्ये सूतिकावासमुच्यते
वरुणानिलयोर्मध्ये रोगार्तानां निवासकम् ८५

सौम्यवायव्ययोर्मध्ये बालशिक्षार्थमरडपम्
सौम्यशांकरयोर्मध्ये धान्यमञ्जलिका भवेत् ८६
तद्बाह्ये वलिते विप्र दासीनां गणिकादिनाम्
नृत्तगेयाभ्यासिनां च क्रयविक्रयजीविनाम् ८७
चक्रिणां वापकानां च कुलालानां तथैव च
मत्स्यमांसोपजीवानां नृत्तकारकयोषितां ८८
विशेषात् शूद्रकानां च गोपालानां च कारुणाम्
करणानां गृहश्रेणी चापस्थानपरिग्रहम् ८९
परितः कल्पयेत् धीमान् पूर्वादीशावसानकं
तद्बाह्ये त्वीशदिग्भागे श्मशानं परिकल्पयेत् ९०
दक्षिणे चोत्तरे वापि स्थपत्यादिनिवासकम्
तेषां बाह्ये तु कर्तव्यं रजकानां निवासकम् ९१
तद्बाह्ये क्रोशमात्रे तु चराडालश्रेणिरुच्यते
प्राकारलक्षणं ह्येवं प्रोच्यते द्विजसत्तम ९२

इति काश्यपशिल्पे प्राकारलक्षणं नाम त्रिचत्वारिंशः पटलः

## अथ चतुश्चत्वारिंशः पटलः

### मराडपलक्षणम्

अथ वक्ष्ये विशेषेण मराडपानां तु लक्षणम्
प्रासादस्यैकभूमौ तु प्रोच्यते मुखमराडपः १
जातिच्छन्दविकल्पानामाभास ानां तथैव च
प्रासादादिमुखे चैव दिशासु विदिशासु वा २
ग्रामादीनां तु मध्ये वा दिशासु विदिशासु वा
उद्याने वा नदीतीरे कटाके वा तथा पुनः ३
देवार्थं मराडपं कुर्यात् अष्टदिङ्मुखमराडपम्

प्रासादस्याग्रतः कुर्यात् मण्डपं तु चतुष्टयम् ४
मुखमण्डपमादौ तु प्रतिमामण्डपं ततः
स्नापनार्थं तृतीयं तु नृत्तार्थं च चतुर्थकम् ५
तेषु वै प्रथमं प्राग्वत् द्वितीयादिरथोच्यते
अन्तर्हाराणि चैकानि मध्यहाराणि वा कुरु ६
मण्डपात् मण्डपं तत्र शालायाः मण्डपान्तरम्
अन्तरालमिति ख्यातमादौ तल्लक्षणं शृणु ७
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टकरं तु वा
नवधर्मकरं वापि रुद्रहस्तमथापि वा ८
अनराळविशालं तु रुद्रसंख्या प्रकीर्तिता
यत्र यन्मण्डपं कुर्यात् तस्मिन् पङ्क्त्या विशेषतः ९
एकद्वित्रिचतुष्पञ्चभक्त्या वाऽप्यन्तराळकम्
सावकाशान्तराळं वा भित्तिमध्यमथापि वा १०
भित्तिमध्यान्तराळं चेत् पार्श्वयोः वेशसंयुतम्
एकद्वित्र्यग्रपादं वा वेशं भक्त्यैकमेव वा ११
द्वयोर्मध्ये च द्वारं जालकं वा प्रकल्पयेत्
उत्तरे जलधारां च स्नानार्थं परिकल्पयेत् १२
युग्मायुग्मं तु पङ्क्तिर्वाऽभ्यन्तराळं द्विजोत्तम
अधिष्टानादिसर्वांगं मण्डपस्य समं भवेत् १३
अन्तराळं समाख्यातं शृणु मण्डपलक्षणम्
त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात् १४
एवमेकोनविंशं तु नवधा मण्डपं भवेत्
आभाससदनानां तु आभासं मण्डपं भवेत् १५
एकविंशति हस्तादि द्विद्विहस्तविवर्धनात्
सप्तत्रिंशति हस्तान्तं विकल्पं नवधा भवेत् १६

आभासानां च तद्योग्यं स्वस्वयोग्यमथापि वा
नवत्रिंशतिमारभ्य द्विद्विहस्तविवर्धनात् १७
पञ्चाधिकं तु पञ्चाशत् करान्तं छन्दमुच्यते
सप्तपञ्चाशदारभ्य द्विद्विसप्तविवर्धनात् १८
साग्निसप्ततिहस्तान्तं प्रसृता जातिरुच्यते
तद्विस्तारसमं दीर्घं समाश्रं मण्डपं भवेत् १९
अध्यर्धहस्तमारभ्य षट्षडंगुलवर्धनात्
पञ्चहस्तावधिर्यावत् पङ्क्तिव्यासं तु कल्पयेत् २०
अर्धहस्तं समारभ्य यावत् पञ्चकरावधि
गुणांगुलविवृद्ध्या तु पङ्क्तिव्यासं प्रकल्पयेत् २१
सार्धद्विहस्तमारभ्य षडंगुलविवर्धनात्
स्तंभानामुदयं ह्येवं स्तंभव्यासमथोच्यते २२
वस्वंगुलं समारभ्य अर्धांगुलविवर्धनात्
एकोनविंशमात्रान्तं त्रयोविंशांघ्रिविस्तृतम् २३
पादोच्चं भानुरुद्रांशं दश वै चाष्ट वा भजेत्
मूलाकारं तदेकांशं दन्तधूतूनमग्रकम् २४
तलिपार्धं तलोत्तुङ्गं सामान्यं सर्वमण्डपे
तलिपोच्चे तु भूतांशे द्विभागं च तलोदयम् २५
अंघ्रितुङ्गाग्निवेदैकभागं वापि मसूरकम्
उपपीठमधिष्ठानं केवलं वा मसूरकम् २६
धरातलसमं प्रोक्तं द्विगुणं त्रिगुणं तु वा
उपपीठोदयं ख्यातं उपपीठार्थवत्तु वा २७
उपपीठमधिष्ठानं चरणं प्रस्तरं तथा
नीप्रवेशमलंकारं गुण्यं प्रागिव विद्यते २८
पङ्क्तित्रयसमायुक्तं षोडशस्तंभसंयुतम्

कलाल्पनासिकोपेतं मध्ये कूटं तु एव वा २९
मरिडतं वाथ सर्वत्र चतुर्द्वारयुतं तु वा
अ्रष्टदिक् द्वारमेकं वा द्वयं वा जालकोष्टदिक् ३०
बाह्ये सोपानसंयुक्तं चित्रितं तोरणादिभिः
तोरणादिविहीनं वा कल्प्यैवं प्रथमं भवेत् ३१
चतुर्भक्त्या विशालं तु अ्रष्टदिक् द्वारसंयुतम्
पूर्वापरद्विपत्त्येकभक्त्या विस्तारनीप्रकम् ३२
मध्यस्थांघ्रिं परित्यज्य ऊर्ध्वे कूटं द्विभक्तिकम्
वसुपञ्जरसंयुक्तं द्वितीयं मराडपं भवेत् ३३
पञ्चभक्त्या विशालं तु मध्ये कूटं द्विभागकम्
मराडपं परितोंशो न द्वात्रिंशत् चरणान्वितम् ३४
भानुद्विगुणसंराष्ट्रं पञ्जराष्टकसंयुतम्
इष्टदिक् द्वारसंयुक्तं द्वारमन्यत्र कुडयकम् ३५
द्वारस्थाने तु सोपानं सर्वालंकारसंयुतम्
कुडयकुंभलताद्यैस्तु भूषितं तु तृतीयकम् ३६
चतुरश्रं तु षट्भक्त्या मध्ये कूटं विभागधा
तत्कूटमष्टपादाढ्यं मध्ये रङ्गसमायुतम् ३७
चतुर्द्वारसमायुक्तमिष्टदिक् द्वारमेव वा
द्विभक्त्याऽपि हृतं चैव भक्त्यादि प्रथमायुतम् ३८
अ्रष्टदिक् भद्रसंयुक्तं चतुर्दिक् भद्रमेव वा
चत्वारिंशति चाष्टांघ्रि युक्तं वा तत्र चोदितम् ३९
चतुर्विंशाल्पनासाढ्यं कुडयकुंभलतान्वितम्
तोरणाष्टकसंयुक्तं तृतीयं मराडपं त्विदम् ४०
चतुरश्रं तु सप्तांशं षष्ट्यंघ्रिकसमायुतम्
नवभागेन तन्मध्ये कूटं वा मरिडतांगणम् ४१

द्वात्रिंशदल्पनासाढ्यं चतुर्दिक् भद्रसंयुतम्
त्रिभागैकांशविस्तारनिर्गमं मुखभद्रकम्  ४२
मध्यरङ्गसमोपेतं द्विष्टकुड्यसमन्वितम्
सर्वालंकारसंयुक्तं पञ्चमं परिकीर्तितम्  ४३
युगाश्रमष्टभक्त्या तु अशीतिचरणान्वितम्
चतुर्भागेन तन्मध्ये ऊर्ध्वकूटं प्रकल्पयेत्  ४४
चतुर्दिक् द्वारसंयुक्तमिष्टदिक् द्वारमेव वा
मुखसोपानमग्न्यंशैः द्वारं नीप्रसमन्वितम्  ४५
मध्यरंगसमायुक्तं षडष्टनासिकान्वितम्
सर्वालंकारसंयुक्तं सप्तमं मण्डपं भवेत्  ४६
चतुरश्रं नवांशं तु षण्णवत्यंघ्रिसंयुतम्
मध्ये कूटं त्रिभागं स्यात् चतुर्दिक् द्वारसंयुतम्  ४६-२
इष्टदिक् द्वारमथवा मुखसोपानसंयुतम्
सर्वालंकारसम्युक्तं सप्तमं मण्डपं भवेत्  ४६-३
चतुरश्रं दशांशं तु भान्वादिकदशांघ्रिकं
मध्ये चैवाष्टदिग्भाग नव कूटसमायुतम्  ४७
कूटोपरि नीप्रकांशे अन्तराळं प्रकल्पयेत्
पार्श्वान्मुखेन सोपानं दिशि भद्रसमन्वितम्  ४८
सर्वालंकारसंयुक्तमष्टमं मण्डपं भवेत्
रुद्रभक्त्यायुगाश्रं तु मध्ये द्व्यंशेन कूटकम्  ४९
मुखे सोपानसंयुक्तं अष्टदिक् भद्रसंयुतम्
द्वारमत्रैव कुड्यांशमिष्टभागावसानकम्  ५०
सर्वालंकारसंयुक्तं नवमं मण्डपं भवेत्
द्वादशांशे युगाश्रं तु मध्ये द्व्यंशेन कूटकम्  ५१
मण्डपस्य तु बाह्ये तु अंशेनालिंद्रमिष्यते

तद्विंशेन तु विस्तारनिष्क्रान्तः स्यात् चतुर्दशी ५२
साष्टषष्टिसमं पादमाद्यं केतुप्रकल्पयेत्
सर्वालंकारसंयुक्तं दशमं मराडपं भवेत् ५३
तारं त्रयोदशांशेन मध्ये त्र्यंशेन कूटकम्
इष्टदिक् कुड्यसंयुक्तं चतुर्दिक् भद्रसंयुतम् ५४
प्रमुखे नन्दभागेन मुखभद्रं प्रकल्पयेत्
सद्वयं नवतीभक्त्या भक्त्यांघ्रि च समन्वितम् ५५
सर्वालंकारसंयुक्तं मराडपं रुद्रसंख्यकम्
त्रिपञ्चपङ्क्तिविस्तारायामं तु चतुरश्रकम् ५६
मध्ये कूटं गुणांशेन श्वने ऊर्ध्वसमन्वितम्
गुणांशं विस्तृतायाममुखभद्रसमन्वितम् ५७
इष्टदिक्कुड्यसंयुक्तमायतांघ्रिसमन्वितम्
पञ्चांशं त्रिद्वया तिथ्या द्विशतं चरणायतम् ५८
सर्वालंकारसंयुक्तं मराडपं तु त्रयोदशम्
षोडशांशं युगाश्रं तु मध्ये कूटं द्विभागकम् ५९
द्व्यष्टाशीतिसमायुक्तद्विशतं पादमुच्यते
मुखभद्रं गुणांशेन तदर्धेनेतरे दिशि ६०
सर्वालंकारसंयुक्तं मराडपं स्याच्चतुर्दशम्
एवं हि मनुभेदेन युगाश्रं मराडपं विदुः ६१
अत ऊर्ध्वं चतुस्त्रिंशदंशं सीमावसानकम्
चतुरश्रो मराडपः स्यात् सर्वालंकारसंयुतः ६२
भित्तिं स्तंभं च परितः कर्तुरिच्छा वशान्नयेत्
समाश्रमराडपं ह्येतदायताश्रमथोच्यते ६३
विस्तारं पङ्क्तितुल्येव सायतं वाथ पङ्क्तयः
विस्तारपङ्क्तिमानं तु गुणांगुलविवर्धनात् ६४

सप्तविंशांगुलं यावत् तावदायं नवोदितम्
वर्धाद्धीणं तथा वाथ मराडपेन करोदितम् ६५
नाश्रयेत्तु करं पूर्वं मराडपं तु समाचरेत्
अशेषघटसंख्या तु प्राग्वदायाममाचरेत् ६६
भक्तिसंख्यासमोपेतमराडपस्य तदायतम्
तस्योचितविभागं तु कृत्वा वा मराडपं कुरु ६७
पङ्क्तित्रयविशालं तु पञ्चपङ्क्तिविशालकम्
एकपार्श्वे वरे वाथ द्वारमंशेन कल्पयेत् ६८
पार्श्वे द्वारयुतं द्वे तु त्रिंशदंघ्रि समन्वितम्
तदेव परितोंशेन मराडपाभ्यन्तरे रसः ६९
लुपादोर्ध्वं हनं कुर्यादष्टाविंशांघ्रि संयुतम्
पुरे पारयुतं चेत्तु चरणं चाष्टविंशतिः ७०
अथवा वारहीनं तु त्रिरष्टचरणान्वितम्
पादं प्रत्यल्पनासाढ्यं वेदिजालकतोरणम् ७१
नानाकुंभलताद्यैश्च कल्पितं प्रथमं भवेत्
चतुर्भक्तिविशालं तु आयामे तु षडंशकम् ७२
मराडपं परितोंशेन कूटमभ्यन्तरे भवेत्
द्विभक्तिविस्तृतं चैकभक्त्या तु मुखभद्रकम् ७३
द्वात्रिंशत् चरणोपेतं मराडपं तु द्वितीयकम्
विशालं पञ्चभक्त्या स्यादायामे सप्तभक्तयः ७४
त्रिपञ्चभक्तिविस्तारदीर्घा मध्ये सभा भवेत्
मराडपं परितोंशेन इष्टदिक् भद्रसंयुतम् ७५
चत्वारिंशत् पादयुतं सर्वालंकारसंयुतम्
वेदिकाद्यैस्समायुक्तं तृतीयं मराडपं भवेत् ७६
रसभक्तिविशालं तु वसुभक्त्यायतं भवेत्

द्विचतुर्भक्तिविस्तारदीर्घं मध्ये महोदयम् ७७
मराडपं परितोष्टांशमिष्टदीर्घकभद्रकम्
षष्टिसंख्यांघ्रिसंयुक्तं चतुर्थं मराडपं भवेत् ७८
त्रिभक्तिविस्तृतं पञ्चभक्त्यायामसमं करम्
मराडपे परितोष्टांशे इष्टदिक् भद्रसंयुतम् ७९
त्रिभक्तिविस्तृतं चैव भक्त्या तन्मुखभद्रकम्
सप्ताधिकद्वयाधिक्यं पादमित्यभिधीयते ८०
सर्वालंकारसंयुक्तं पञ्चमं मराडपं भवेत्
वसुभक्तिविशालं च दशभक्त्या तथान्वितम् ८१
द्विचतुर्भक्तिविस्तारदीर्घं मध्यममराडपम्
परितो मराडपं त्र्यंशं मध्यस्तंभविवर्जितम् ८२
इंद्रदिंद्रमुखाभद्रां चतुर्द्व्यंशेन सुव्रत
षरागवत्यंघ्रिसंयुक्तं सर्वालंकारसंयुतम् ८३
षष्ठमं मराडपं ह्येवं प्रोच्यते तु शिवार्हकम्
नवभक्तिविशालं च रुद्रभक्त्या तयान्वितम् ८४
एकत्रिभक्तिविस्तारदीर्घं मध्ये सभा भवेत्
परितो देवभागं तु मराडपं परिकल्पयेत् ८५
त्रिचतुर्भागविस्तारदीर्घं स्यात् मुखभद्रकम्
सर्वालंकारसंयुक्तं अष्टमं मराडपं भवेत् ८६
इष्टदिक् द्वारुरंकु स्यात् कल्पयेत् परितो भवेत्
एवं हि मनुभेदं च सायतं मराडपं विदुः ८७
त्रिचतुष्पञ्चषट्सप्त अंकरास्य तदायतं
सर्वेषां मराडपानां च भित्तिव्यासं तु पञ्चधा ८८
पादायामविशालेन दारुपादेन वा समं
सर्वेषां मुखभद्राणां करणं मराडपाकृति ८९

पार्श्वे सोपानसंयुक्तं हस्तिहस्तविभूषितम्
पञ्चषट्सप्ताष्टनवदराडं वा तस्य विस्तृतम् ६०
सपादं सार्धहस्तं वा हस्तिहस्तोदयान्वितम्
यष्टिनानूर्ध्वकल्पं वा स्वश्रं हस्तिकहस्तिकम् ६१
तन्नीप्रं किपुरेरस्य अग्रं ककुन्ताकृति
मूलादष्टांशरहितमग्रमस्तुक्रमात् कृशम् ६२
हस्तिहस्त्यन्तरं विप्र युग्मं वाऽयुग्मदष्टयः
दराडं सपाददराडं वा सार्धं वा द्वित्रिमात्रकम् ६३
द्विदराडं वाथधीषुश्च विस्तारं स्यात्तदेव हि
तेन द्विगुणनीप्रं तु अभयस्थानमराडपे ६४
यष्टेरुच्चाग्निभागैकभागं स्यादामलोदयम्
आदौ समतले स्थित्वा सव्यपादपुरस्सरम् ६५
सोपानारोहणं विद्यात् मर्त्यानां तु विधीयते
मराडपं ह्येवमाख्यातं गोपुरं शृणु सुव्रत ६६

इति काश्यपशिल्पे मराडपलक्षणं नाम चतुश्चत्वारिंशः पटलः

## अथ पञ्चचत्वारिंशः पटलः

### गोपुरलक्षणम्

अथ वक्ष्ये विशेषेण गोपुराणां तु लक्षणम्
अन्तर्मराडलसालादिष्वधुना प्रोच्यते क्रमात् १
द्वारशोभा द्वारशाला द्वारप्रासादहर्म्यकम्
द्वारगोपुरमित्येते क्रमात् नाम्ना प्रकीर्तिताः २
एकद्वित्रिकलां वापि द्वारशोभां प्रकल्पयेत्
द्विभूमिर्वा त्रिभूमिर्वा चतुर्भूमिरथापि वा ३
द्वारशाला तु कर्तव्या साले स्यात्तु द्वितीयके

त्रिचतुष्पञ्चभूमिर्वा द्वारप्रासादमारभेत् ४
चतुष्पञ्चतलं वाथ षट्कलं वाथ हर्म्यकम्
पञ्चषट्सप्तभूमिर्वा द्वारगोपुरमिष्यते ५
अथवा सर्वसालेषु एकद्वित्रतलं तु वा
सोपपीठमधिष्ठानं विना वान्नोपपीठकम् ६
तयोरुच्चयतः सर्वे नवपञ्चवदाम्यहम्
मूलप्रासादविस्तारे सप्ताष्टनवभाजिते ७
दशैकादशभागे च एकांशरहितं क्रमात्
शोभादिगोपुरान्तानां विपुलं कीर्तितं क्रमात् ८
विकल्पाभासहर्म्याणां गोपुराणां ततस्त्विमे
मूलालयविशाले तु चतुष्पञ्चषडंशके ९
सप्ताष्टांशे न हीनं तु छन्दशोभोदयं भवेत्
मूलगेहत्रिभागैकं भागमर्धांशमेव च १०
त्रिद्व्यंशं चतुरंशे तु गुणांशं च तथैव च
पञ्चभागे तु वेदांशं सालेषु प्रथमादिषु ११
शोभादिगोपुरान्तानां पतिर्जात्यालयतालयम्
कल्प्यैवं हर्म्यमानं स्यादथ मानवशात्तत १२
द्विहस्तादिद्विरष्टान्तमेकहस्तविवर्धनात्
शोभादिगोपुरान्तानां प्रत्येकं त्रित्रिमानकम् १३
विकल्पाभासयोरेवं छन्दहर्म्ये च लक्ष्यते
गुणहस्तं समारभ्य सप्तदशकरावधि १४
एकहस्तविवृद्ध्या तु शोभादीनां त्रयं त्रयम्
चतुर्हस्तं समारभ्य यावदष्टादशं करम् १५
शोभादीनां क्रमात् व्यासं जातिहर्म्ये विधीयते
प्रत्येकं त्रित्रिराकारं नन्दपञ्चावधिर्भवेत् १६

हस्तमानेन विस्तारं क्षुद्राणामर्हकं क्रमात्
स्वस्वोदितं तु कर्तव्यं विपरीतं विपत्करम् १७
अथवा त्रिचतुष्पञ्चषट्सप्ताष्टनवं करम्
दशैकादशहस्तं च अधमादित्रयं त्रयम् १८
सर्वहर्म्ये तथा साले यथेष्टं परिकल्पयेत्
महत्तरे तु श्रेष्ठादिमन्तरे मध्यमत्रयम् १९
क्षुद्राल्पयोः प्रशस्तानि कन्यसत्रयमुच्यते
सर्वकालेषु कर्तव्यं कर्तव्यं सार्वदेशिके २०
अथवा न्यप्रकारेण शोभादीनां च विस्तरम्
पञ्चहस्तं समारभ्य द्विद्विहस्तविवर्धनात् २१
त्रयोदशकरान्तं तु शोभाव्यासं तु कल्पय
पञ्चविंशत् करारभ्य त्रयस्त्रिंशत् करान्तकम् २२
द्वारप्रासादविस्तारं पञ्चधा परिकीर्तितम्
पञ्चत्रिंशत् करारभ्यं चत्वारिंशत् त्रयाधिकम् २३
पञ्चधा द्वारहर्म्यस्य विस्तारः परिकीर्तितः
सपञ्चचत्वारिंशत् पञ्चात्रिंशद्गोपुरान्तकम् २४
द्विद्विहस्तविवृद्ध्या तु पञ्चधा गोपुरान्तकम्
द्वारामधनं साद्यायततेनायतनं शृणु २५
सपादं सार्धं पादोन द्विगुणं द्विगुणं तु वा
सत्रिभागैकभागं तु द्विभागं वाऽऽयतं भवेत् २६
शोभादिगोपुरान्तानामिष्टायामं प्रगृह्यताम्
तेषु किञ्चित् विशेषोऽस्ति तं विशेषं नवं शृणु २७
द्विहस्तमानविस्तारं गृहीत्वैव विशेषतः
आयामं सर्ववत् कल्प्यमनेकेष्विष्टमायतम् २८
हस्तच्छन्दप्रवृत्त्या वा अन्यद्वा पूर्वमाचरेत्

आयादिशोभनोपेतं हस्तमानेन कल्पयेत् २९
तं विना हर्म्यमूलस्य वंशे द्वे कल्पितस्य तु
व्यासायामः समाख्यातः तेषां तुङ्गमथोच्यते ३०
विस्तारं सप्तधाभज्य शोभोच्चं रुद्रभागकम्
काराधाधिकतुङ्गं तु द्वारशालोच्छ्रयं भवेत् ३१
सप्तभागे तु रुद्रांशं भान्वंशं वा तृतीयकम्
विस्तारे तु नवांशे तु मध्यमांशं चतुर्थके ३२
विस्तारजीवनोत्सेधे महागोपुरमुच्यते
होमादिस्तूपिपर्यन्तं मानोच्चं तु प्रकीर्तितम् ३३
विस्तारायामयोर्मानं सूत्रं प्राक् बाह्यमुच्यते
तद्बाह्ये कूटकोष्ठादि नीप्रं प्रासादवत् भवेत् ३४
विस्तारस्य त्रिभागैकं चतुर्भागैकमेव वा
पञ्चभागे त्रिभागैकं प्राक् बाह्ये तु निसर्गतः ३५
सार्धहस्तं समारभ्य षट्षडंगुलवर्धनात्
पञ्चहस्तावधिर्यावत् क्षुद्राणां द्वारविस्तृतम् ३६
अल्पानां च तथा प्रोक्तं सन्नराणां ततः शृणु
त्रिहस्तं तु समारभ्य यावत्सप्तकरावधि ३७
षडंगुलविवृद्ध्या तु द्वारव्यासं प्रकीर्तितं
चतुर्हस्तं समारभ्य पञ्चदशकरान्तकम् ३८
रसमात्रा विवृद्ध्या तु महते द्वारविस्तृतम्
तारे सप्तांशे विंशांशं सप्तांशे तु दशांशकम् ३९
अत्यर्धं पादहीनं तु द्विगुणं द्विगुणोन्नतम्
सार्धपादं तु पादं वा द्वारोत्सेधं तु सप्तधा ४०
लिंगस्य मध्यमं द्वारमध्यमं तु वदाम्यहं
शक्तेश्च भूतयोर्मध्ये नवांशकविशेषतः ४१

लिंगमध्यं तु रामे तु द्वारमध्यं प्रयोजयेत्
शोभादिगोपुरान्तानां द्वारमध्यं क्रमोदितम् ४२
तन्मध्ये गोपुरायामं स्तंभयोः पार्श्वयोः समम्
द्वारयोगकवाटं च द्वारलक्षणवत्कुरु ४३
गुणपङ्क्तिसमारभ्य यावदेकोनविंशतिः
गुणपङ्क्तिस्तु विस्तारेष्वेवमेवं प्रकल्पयेत् ४४
यावद्धींद्रकृतिर्व्यस्ता तावदेवाथ पङ्क्तयः
विस्तारे पञ्चभागे तु गुणांशं गर्भगेहकम् ४५
शेषं कुडचविशालं स्यात् एकभूमौ द्विजोत्तम
परितः कुढ्यविस्तारं मानेनैव कल्पयेत् ४६
एवमेकतलं ख्यातं द्वितलं तु तथोच्यते
विस्तारे पञ्चभागं स्यादायामेपि तथैव च ४७
दशांशं गर्भगेहं स्यात् सार्धांशं कुडचविस्तृतम्
कर्णकूटं तु मेनांशं शाला दीर्घविशालकं ४८
हारान्तरं तदंशेन विस्तारे त्वेवमेव च
शालादीर्घं तु पञ्चांशमायामे तु प्रकल्पयेत् ४९
हारान्तरं तु कूटं च एकैकांशेन कल्पयेत्
कूटान्तरसमायामं शेषं हारान्तरान्वितम् ५०
हारान्तरार्धमानेन भद्रं वा भद्रपञ्जरम्
द्वितलं ह्येवमाख्यातं त्रितलं त्वधुनोच्यते ५१
नवांशं विभजेद्व्यासमायामं च तलं भवेत्
गर्भगेहं गुणांशं स्यादंशेन गृहपिण्डिका ५२
अलिंद्रं त्वेकभागेन हारव्यासं शिवांशकम्
कर्णकूटं शिवांशेन शालादीर्घं गुणांशकम् ५३
एकांशं पञ्जरं ख्यातमर्धांशं हारयोत्तरम्

कल्प्यैवमादिभूमिं च द्वितलं पूर्ववत् भवेत् ५४
अथवा न्यप्रकारेण त्रितलं शृणु सुव्रत
द्वारभागं तु विस्तारं रुद्रांशं तु तदायतम् ५५
गुणांशं गर्भगेहं तु गृहपिण्डयंशमुच्यते
त्रितलं तत्समाख्यातं हारं भागेन कल्पयेत् ५६
अळिंद्रांशं तु कुड्यं वा गर्भगेहान्वितं तु वा
आयामे पञ्चभागेन कोष्ठदीर्घं प्रकल्पयेत् ५७
शेषं पूर्ववदुद्दिष्टं द्वितीयं द्वितलोक्तवत्
त्रितलं चैवमाख्यातं चतुस्तलमथोच्यते ५८
विस्तारे तु दशांशे तु तु तद्वदायामपङ्क्तयः
गर्भगेहं त्रिभागं हि सार्धांशं कुड्यविस्तृतम् ५९
अळिंद्रं शिवभागेन हारव्यासं तथैव च
पञ्जरं कर्णकूटं च एकैकांशेन कल्पयेत् ६०
कूटतारसमायामं शेषं हारान्तरान्वितम्
शालायामे तु वेदांशे अर्धांशं हारमन्तरम् ६१
आदिभूरेवमाख्यातमूर्ध्वं पूर्ववदाचरेत्
विस्तारे तु दशांशे तु भान्वंशे तु तदालयम् ६२
पूर्वे परे च शालायां पञ्चभागेन कल्पयेत्
शेषं पूर्ववदुद्दिष्टं चतुर्भौममिदं परम् ६३
तारमेकादशांशं तु आयामं तु तथैव हि
पूर्वे परे च पार्श्वे च शालापञ्चांशमायतम् ६४
एकांशं पञ्जरव्यासं कूटव्यासं शिवांशकम्
हारान्तरं तथार्धांशं कल्प्यैवं प्रथमं तलम् ६५
तस्योर्ध्वभूमयः सर्वाः पूर्ववत्परिकल्पयेत्
तारमेकादशांशं तु तद्दीर्घं तु त्रयोदशम् ६६

गुणांशं गर्भगेहं च द्विभागं भक्तिविस्तृतम्
अलिंद्रं भागतः कल्प्यं हारं भागेन कल्पयेत्  ६७
पार्श्वे शाला तु वेदांशं षडंशं मुखपृष्ठयोः
हारान्तरं शिवांशं स्यात् व्योमपञ्जरकूटयोः  ६८
शेषं पूर्ववदुद्दिष्टं रसभूरेवमेव तु
त्रयोदशांशविष्कंभमायामं च तथैव हि  ६९
भूतांशं गर्भगेहं तु गृहपिराडी द्विभागकम्
अलिंद्रं तु शिवांशेन खराडहर्म्यं शिवांशकम्  ७०
कोष्ठायामं तु भूतांशं रसांशेन च पञ्जरम्
कूटमंशेन कर्तव्यं हारान्तरं तथैव च  ७१
अथवा तत्र दशान्तरमायामं तु त्रिपञ्चकम्
मुखे मुखे महाशालां सप्तांशेन प्रकल्पयेत्  ७२
पञ्चभागेन कर्तव्यं पार्श्वयोः कोष्ठदीर्घकम्
शेषं पूर्ववदुद्दिष्टं सर्वालंकारसंयुतम्  ७३
सप्तभूमी समाख्यातं महागोपुरकं भवेत्
सालिंद्रं वा विना लिंद्रं कल्पयेत्कल्पवित्तमः  ७४
विनालिंद्रकृतं चेत्तु कुडयगर्भगृहं तु वा
अलिंद्रांशं तु संयोज्य कारयेत्तु द्विजोत्तम  ७५
आदिभूरेवमाख्यातमूर्ध्वं षट्तलवत् भवेत्
सप्तभौमं समाख्यातं केषां गरायमथोच्यते  ७६
पादाधिष्ठानयोस्तुङ्गं मूलप्रासादमूलकम्
चतुष्पञ्चषडंशं वा सप्ताष्टनव एव वा  ७७
दशैकादशभागं वा कृत्वैकांशोपपीठकम्
अथवा हस्तमानेन द्वारं मानं यथोचितम्  ७८
तदुच्चं तु चतुष्पञ्च षट्सप्ताष्टौ तु वा भवेत्

नवरुद्रांशभागं वा कृत्वैकांशं विशेषतः ७९
उपपीठोन्नतं ख्यातं शेषं तु गुणभाजिते
अधिष्ठानं तदेकांशं द्विभागं चरणायतम् ८०
होमादुत्तरसीमान्तं द्वारमानं विधीयते
पादबन्धमधिष्ठानं द्वारशोभादिना कुरु ८१
स्तूप्यन्तमुत्तरान्तं वा रसभागविभाजिते
प्रस्तरोच्चं सपादांशं शश्यंशं गलमानकम् ८२
पादोनगुणभागं तु शिरः शेषं शिखोदयम्
एवमेकतलं प्रोक्तं द्वितलं शृणु सुव्रत ८३
उत्तरादिशिखा तं च नवभागविभाजिते
प्रस्तरोच्चं सपादांशं द्विभागं चरणोदयम् ८४
मञ्चमानं शिवांशं स्यात् तत्समं कन्धरोदयम्
शिखरं सार्धपञ्चांशं सपादांशं शिखोदयम् ८५
द्वितलं ह्येवमाख्यातं त्रितलं चाधुना शृणु
उत्तरात् स्तूपिपर्यन्तं भानुभागविभाजिते ८६
सपादं प्रस्तरोत्सेधं सार्धद्व्यंशं पदोदयम्
प्रस्तरं शशिभागेन द्विभागं चरणोदयम् ८७
मञ्चमानं शिवांशं स्यात् अंशं ग्रीवोदयं भवेत्
पञ्चांशं शिखरं ज्ञेयमेकांशं स्तूपिमानकम् ८८
त्रितलं ह्येवमाख्यातं चतुर्भौममथोच्यते
उत्तरादिशिखान्तं तु द्विनवांशविभाजिते ८९
पादोनद्व्यंशं मञ्चोच्चं गुणांशं चरणोदयम्
तदर्धं प्रस्तरोत्सेधं सार्धद्व्यंशं पदोदयम् ९०
तदर्धं प्रस्तरोत्सेधं युग्मांशमंघ्रितुङ्गकम्
तदर्धं मञ्चमानं स्यात्सार्धांशगळमानकम् ९१

सार्धद्व्यंशं शिरोत्सेधं शिखामानं शिवांशकम्
चतुर्भौमं समाख्यातं पञ्चभूमिमथो शृणु ९२
शिखाग्रादुत्तरान्तं तु त्रयोविंशतिभाजिते
द्विभागं प्रस्तरोत्सेधं सार्धद्व्यंशांघ्रि तुङ्गकम् ९३
तदर्धं मञ्चमानं स्यात् पादायामं गुणांशकम्
तस्यार्धं प्रस्तरोत्सेधं सार्धद्व्यंशांघ्रितुङ्गकम् ९४
तदर्धं मञ्चमानं तु द्विभागं चरणोदयम्
प्रस्तरोच्चं शिवांशेन कन्धरोच्चं शिवांशकम् ९५
सार्धद्व्यंशं शिरोत्तुङ्गमेकांशं स्तूपिमानकम्
पञ्चभौमं समाख्यातं षट्भूमिमधुना शृणु ९६
उत्तरादिशिखान्तं च एकोनत्रिंशदंशके
द्विभागं प्रस्तरोत्सेधं पादोच्चं चतुरंशकम् ९७
सत्रिपादशिवांशं तु भूमिसामान्यमीरितम्
सार्धाग्न्यंशमंघ्रितुङ्गं तदर्धं प्रस्तरोदयम् ९८
शिवांशं तु शिखामानं षट्तलं त्वेवमुच्यते
उत्तरादिशिखान्तं तु मानं षट्त्रिंशदंशकम् ९९
पादद्विभागं मञ्चोच्चं सार्धवेदांशमंघ्रिकम्
द्विभागं प्रस्तरोत्सेधं वेदांशं चरणोदयम् १००
पादोनद्व्यंशं मञ्चं स्यात् सार्धाग्न्यंशं पदोदयम्
पादोनद्व्यंशं मञ्चोच्चं गुणांशं पादमानकम् १०१
तदर्धं प्रस्तरोत्सेधं सार्धपद्मांघ्रितुङ्गकम्
तदर्धं मञ्चमानं तु द्विभागं चरणायतम् १०२
प्रस्तरं शशिभागेन शिवांशं गळमानकम्
पादहीनाग्निभागं तु शिरः शेषं शिखोदयम् १०३
एवं सप्ततलं ख्यातं अलंकारमथोच्यते

मराडपानां यथा द्वारशोभां कुर्यात् द्विजोत्तम १०४
मराडपं वा द्वारशाला प्रासादं सदना कृति
मालिकाकृति कर्तव्यं द्वारहर्म्यं द्विजोत्तम १०५
शालाकारं प्रकर्तव्यं द्वारं गोपुरमेव वा
सर्वं तु गोपुरान्तं वा कल्पयेत्कल्पवित्तमः १०६
तेष्वादौ द्वारशोभां तु वद्त्येऽहं द्विजसत्तम
एकद्वित्रितलं वापि सर्वालंकारसंयुतम् १०७
मुखे मुखे महानासि पार्श्वयोः वंशनासिका
स्वस्त्या कृत्यल्पनासाढ्यं प्रागुक्तविधिना द्विज १०८
युक्तस्तूपिसमायुक्तं लुपारो हि शिरस्तु वा
मराडपा कृतिकं वापि श्रीकान्तं तदुदाहृतम् १०९
शालाकारशिरस्तस्मिन् षराणासिमुखपृष्ठयोः
पार्श्वयोः वंशनासाढ्यं युक्तस्तूपिकसंयुतम् ११०
अन्तः पादोत्तरैर्युक्तं इति कान्तमिदं परम्
मुखे मुखे च षराणासि पार्श्वयोः वंशनासिकम् १११
सभाकारशिरः स्कन्धं कान्तं विजयमेव हि
एवं त्रिविधनीत्या तु द्वारशोभां प्रकल्पयेत् ११२
मुखे मुखे महानासि पार्श्वयोश्च तथैव हि
अर्धकोटि चतस्राढ्यं पञ्जरं च तदा कृति ११३
शाला कारशिरोपेतमयुग्मस्तूपिसंयुतम्
विजयं विशालमेतद्धि विशालालयमुच्यते ११४
अर्धकोटिसहस्राङ्गं पार्श्वयोः भद्रनासिकम्
पार्श्वयोः वंशनास्यंगमयुग्मस्तूपिकान्वितम् ११५
पादं प्रत्यल्पनासाढ्यं सर्वावयवसंयुतम्
विप्रतीकान्तालंकारं चद्त्यते तु विशेषतः ११६

पूर्ववत् भूमिभागं च चतुर्दिग्भद्रसंयुतम्
महानासि चतुष्काढ्यं शिरोभद्रसमन्वितम्  ११७
अन्तः पादोत्तरैर्युक्तमयुग्मस्तूपिकान्वितम्
त्रिविधा द्वारशाला स्यात् द्वारप्रासादमुच्यते  ११८
अन्तः पादोत्तरैर्युक्तमन्धाय्यायैरलंकृतम्
द्वारे द्वाराङ्गसंयुक्तं द्वारं तत् भद्रनासिकम्  ११९
पूर्वेऽपरे च शालायाः सभद्रं भद्रनासिका
नानामसूरकस्तंभवेदिकाजालतोरणम्  १२०
अन्तः पादोत्तरैर्युक्तं मध्यतोरणसंयुतम्
पार्श्वयोर्दण्डवक्राढ्यं क्षुद्रनासी विभूषितम्  १२१
शालाकारशिरोपेतं जालकादिविभूषितम्
केशविशालालंकारं भूमिभागे च पूर्ववत्  १२२
पार्श्वयोश्च मुखे पृष्ठे महानासी चतुष्टयम्
अयुग्मस्तूपिसंयुक्तं द्वारप्रासादकुड्यकम्  १२३
वक्ष्येऽहं द्वारहर्म्यस्य लक्षणं द्विजसत्तम
प्रागुक्तवत्प्रकर्तव्यं भूमिभागे द्विजोत्तम  १२४
सभाशिरस्य संयुक्तं स्वस्तिका कृति नासिकम्
अन्तः पादोत्तरैर्युक्तं युग्मं --- स्तूपिनान्वितम्  १२५
कूटं शिखरनासाढ्यमयुग्मस्तूपिनासिकम्
कूटादिभूमिभागं च प्रागिवैव प्रकल्पयेत्  १२६
अपरे च परे नासिसतारे द्व्यंशनीप्रकम्
शालाकारं शिरः कार्यं वस्वश्रस्तूपिकान्वितम्  १२७
शाला निष्क्रान्तसंयुक्तं नानालंकारसंयुतम्
नानाधिष्ठानचरणैः युक्तं तत् सोपपीठकम्  १२८
द्वारहर्म्यं त्रिधा प्रोक्तं शृणु गोपुरलक्षणम्

चतुर्दिग्भद्रसंयुक्तमन्तः पादोत्तरैर्युतम् १२९
शालाकारशिरो युक्तं भद्रनासी मुखे मुखे
पार्श्वयोश्च महानासी पादं प्रत्यल्पनासिका १३०
मात्रादण्डमिति ख्यातं श्रीविशालमथो शृणु
पूर्ववत् भूमिभागं च तलात्तुङ्गं करी कृतम् १३१
सभाकारं शिरो वापि शालाकारमथापि वा
नानामसूरकस्तंभवेदिकाद्यैरलंकृतम् १३२
चतुर्दिक्षु महानासि विदिक्षुक्षुद्रनासिकम्
चतुर्मुखं ततो वक्ष्ये भूमिभागादिपूर्ववत् १३३
दिशिभद्रसमायुक्तं मध्ये वारणसंयुतम्
नानामसूरकस्तंभवेदिकाद्यैरलंकृतम् १३४
सभाकारं शिरो वापि शालाकारमथापि वा
मुखे मुखे महानासी पार्श्वयोः द्विद्विनासिके १३५
अन्तः पादोत्तरैर्युक्तं प्रस्तरे तु तलं प्रति
अन्तस्सोपानसंयुक्तं मध्ये वारणसंयुतम् १३६
एवं त्रिधा समुद्दिष्टं द्वारगोपुरलक्षणं
अळिंद्रांशं च कुड्यं वा वृषभस्थलमेव वा १३७
तुल्याद्यैः प्रस्तरं वाथ अळिंद्राङ्गं यथोचितम्
शालाकारं सभाकारं मालिकाकारमेव वा १३८
यद्यदिष्टं तु यद्द्वारे तत्तत्रैव प्रकल्पयेत्
बाह्येऽबाह्योंघ्रियदाभ्यां मध्यकुड्ययुतं तु वा १३९
गृहपिण्डी गर्भगेहं प्रागिवैव प्रकल्पयेत्
अळिंद्रहारयोर्माने विवृतांघ्रिकमेव वा १४०
प्रस्तरे दिष्टभूम्यन्तं गोपानादिसमन्वितम्
कूटकोष्ठाद्यलंकारमूर्ध्वस्तमत्प्रकल्पयेत् १४१

भूमिभागमलंकारं गळान्तं परिकल्पयेत्
शीर्षं दण्डाभं शालाभं शालाकारं तदुच्यते १४२
लुपारेपि तदायत्तं सभाकारकमुच्यते
प्रस्तरं प्रतिसंछाद्यमण्डपं यत्रिविष्टिना १४३
मालिकाकृतिकं ख्यातं मण्डपे तु परस्परम्
गोपुरं ह्येवमाख्यातं परिवारविधिं शृणु १४४
इति काश्यपशिल्पे गोपुरलक्षणं नाम पञ्चचत्वारिंशः पटलः समाप्तः
इति पूर्वभागः समाप्तः

Reference:
K. S. Subrahmaṇya Śāstri, *Śrīmat Kāśyapaśilpaśāstram, Pūrva Bhāgaḥ*, (Srirangam: Sri Vani Vilas Syndicate, 1968).

श्री गणेशाय नमः

अथ काश्यपशिल्पे उत्तरभागः

अथ षट्चत्वारिंशः पटलः

परिवारविधिः

अथ वक्ष्ये विशेषेण परिवारविधिं परम्
अष्टौ च षोडश तथा द्वात्रिंशच्च यथाक्रमम् १
अन्तर्मण्डलगैः सर्वैः परिवारं न कल्पयेत्
अन्तर्मण्डलदेशे तु परिवाराष्टकं द्विज २
कलास्य परिवारान्मध्यप्राकारे प्रकल्पयेत्
प्राकारे च चतुर्थे वै द्वात्रिंशत् परिवारकम् ३
तत्तत्प्राकारमध्ये वा सालकुड्याश्रितेऽथवा
मुखायामं विना बीजं चतुरश्रे कृते सति ४
नवांशं विभजेद्बीजं अर्धांशे मूलहर्म्यकम्
तथा दृष्टार्धभागेषु पूर्वादिक्रमयोगतः ५
प्राच्यां वै वृषभः स्थाप्यः अनलस्त्वग्निगोचरे
अग्निदुर्गाऽथ तद्वामे सप्तमातर एव च ६
दक्षिणे वीरभद्रश्च वामे चैव विनायकः
वारुणे षण्मुखश्चैव ज्येष्ठा वै वायुकोणके ७
सौम्ये तु केशवः स्थाप्यः तत्र कात्यायनी तु वा
भास्करस्त्वीशदिग्देशे तत्पीठं प्रतिमा तु वा ८
प्रतिमा त्वालयोपेता पीठं चेदालयं विना
इन्द्रानलशिवांशस्थाः पश्चिमाभिमुखं स्थिताः ९
रक्षो वारुणवायुस्थाः सर्वाश्च प्राङ्मुखं स्थिताः
विष्णुश्चेत् प्राङ्मुखः सौम्ये दुर्गा चेत् दक्षिणानना १०
मातरः सौम्यवक्त्राः स्युः दिनेशः पश्चिमाननः

मातृवामस्थविघ्नेशः प्राच्याभिमुख उच्यते ११
आदौ वा द्वित्रिभागे वा अंशे चराडेश्वरालयम्
त्रिदराडे बलिपीठाग्रे वृषस्थानं वरं भवेत् १२
अपरध्वजदराडेन तयोर्मध्येऽष्टभाजिते
नवधा स्यात् वृषस्थानं गोपुरद्वारनिर्गतिः १३
मराडपाद्वाथ तन्नीप्रं वृत्तपीठान्तरं भवेत्
परिवाराष्टकं ह्येवं षोडशं चाधुना शृणु १४
बीजे तु पञ्चपञ्चांशे शक्रभागादिषु क्रमात्
इन्द्रोऽश्विनौ च वह्निश्च पीतरश्च यमस्तथा १५
रोहिणी निर्ऋतिश्चैव अप्सरो गण एव च
वरुणो ऋषयश्चैव वायुरुद्रास्तथैव च १६
सोमश्च क्षेत्रपालश्च ईशानश्चाथ भास्कराः
मूलगेहसमीक्षांस्तान् स्थापयेत्तु प्रदक्षिणम् १७
कर्णकांशगतान् देवान् प्राग्देशे पश्चिमाननान्
पश्चिमस्थान् प्राग्वदनान् कल्पयेत् कल्पवित्तमः १८
षोडशं ह्येवमाख्यातं द्वात्रिंशदधुनोच्यते
चतुर्थे सालबीजे तु नन्दनन्दविभाजिते १९
बाह्ये तु चतुरष्टांशे पूर्वादिक्रमयोगतः
अनन्तोर्को भवश्चैव वरुतोप्सरसस्तथा २०
गौरी शर्वो विरिञ्चिश्शिवोत्तमो भृगुरीश्वरः
अगस्त्यः कौशिकश्चैव एकनेत्रो विनायकः २१
सरस्वती च लक्ष्मीश्च एकाक्षश्चैकरुद्रकः
पशुपतिश्च वसवः महादेवस्तथैव च २२
त्रिमूर्तिर्धनदश्चेन्द्रः कालाग्निरुद्र एव च
श्रीकराठो नागदेवश्च भीमो भूमिश्शिखराडकः २३

उग्रश्शनैश्चरश्चैव द्वात्रिंशत्परिवारकाः
अथासु पृथिवीस्थाने गौरीस्थापनमाचरेत् २४
गौरीस्थाने न्यसेत् पृथ्वीं शेषं पूर्ववदाचरेत्
आभ्यन्तराननान् सर्वान् स्थापयेत्तु विशेषतः २५
गौर्यास्तु वनमालाथ विमानं वा प्रकल्पयेत्
अन्येषामपि देवानां विमानं वाथ मण्डपम् २६
मूलहर्म्यत्रिपादं वा अर्धं वा पादमेव वा
गर्भगेहसमं वापि गर्भार्धं वा त्रिपादकम् २७
त्रिचतुष्पञ्चहस्तं वा परिवारालयं भवेत्
आभाससदने तेन माननैव प्रकल्पयेत् २८
शक्त्यालये तु यन्मूलं गेहमेवं तथैव हि
कारयेन्नाधिकं रम्यं विपरीतं विपत्करम् २९
त्रिवर्गमण्डपाकारं चतुर्द्वारसमन्वितम्
उक्षावासं प्रकर्तव्यं शेषाणां तु यथोचितम् ३०
परिवारालयं प्रोक्तं प्रतिमालक्षणं शृणु
परिवारालये द्वारगर्भमानेन वै भवेत् ३१
सकलानां तु यन्मानं तन्मानं तत्र गृह्यताम्
सर्वासां देवतानां च स्थानकं वासनं तु वा ३२
द्वात्रिंशत् परिवारं तु जातिहर्म्ये प्रकल्पयेत्
छन्दे तु षोडशं ख्यातं शेषे तु स्वस्तिकं भवेत् ३३
अथवा सर्वहर्म्येषु सर्वं वा परिकल्पयेत्
जात्यायामांशकादीनि प्रतिमालक्षणोक्तवत् ३४

अथ वृषभलक्षणम्

आदौ तु परिवाराणां वक्ष्ये वृषभलक्षणम्
तुंगे पञ्चदशांशे तु एकांशं चांगुलं भवेत् ३५

चत्वारिंशांगुलायामं गळात्पृष्ठावसानकम्
मूर्धादिगळपर्यन्तं वर्णमात्रमुदाहृतम् ३६
तस्माद् ग्रीवोच्चमष्टांशं पूर्वोक्तं षोडशांगुलम्
ऊरुदीर्घं चतुष्पादैः षरामात्रं परिकीर्तितम् ३७
जानुमानं द्विमात्रं स्याज्ञंघामानं षडंगुलम्
खुरमानं द्विमात्रं स्यात्तुंगमेवं प्रकल्पयेत् ३८
शृंगान्तरं तु वस्वंशं शृंगोच्चं चतुरंगुलम्
शृंगमूलविशालं तु चतुरंगुलमुच्यते ३९
अर्धांगुलं तदर्धाग्रं व्यासं मूलात्कृशं क्रमात्
किञ्चिद्वक्रसमायुक्तौ शृंगौ मध्यान्तरे बुध ४०
ललाटव्यासं नन्दांशं मुखव्यासं शरांगुलम्
घनं च तत्समं ख्यातं नेत्रमेकांगुलं भवेत् ४१
नेत्रमध्यललाटोच्चं वेदमात्रमुदाहृतम्
नेत्रात्कर्णान्तपर्यन्तं पञ्चांशं कर्णदीर्घकम् ४२
कर्णमूलविशालं तु द्विमात्रमिति कथ्यते
मध्यव्यासं चतुर्मात्रं अग्रमंगुलविस्तृतम् ४३
घनमर्धांगुलं ख्यातं घ्राणं सार्धांगुलायतम्
व्यासमेकांगुलं ख्यातं गाढं तत्सममुच्यते ४४
अंगुलं नासिकोर्ध्वं तु तुंगमित्यभिधीयते
आस्यं पञ्चांगुलायाममधरोष्ठं द्वयांगुलम् ४५
त्रिमात्रं चोत्तरोष्ठं च युक्तितः कल्पयेत्क्रमात्
जिह्वायामविशालोच्चं त्रिद्वयेकांगुलमुच्यते ४६
ग्रीवाव्यासो दशांशः स्यात्तन्मूलं द्वादशांगुलम्
पृष्ठग्रीवस्य मूलस्य व्यासमष्टांगुलं भवेत् ४७
पृष्ठग्रीवाग्रविस्तारं षडंगुलमुदाहृतम्

ककुदुच्चं चतुर्मात्रं तस्य व्यासं षडंगुलम् ४८
ग्रीवाग्रस्य घनं चापि अत्यर्धांगुलमुच्यते
शरीरे मध्यमे व्यासं चतुर्विंशांगुलं भवेत् ४९
अपरे व्यासं भान्वंशं शेषं युक्त्या समाचरेत्
पूर्वपादोरुमूलस्य व्यासं पञ्चांगुलं भवेत् ५०
तदूर्ध्वाग्रं चतुर्मात्रं जंघामूलं च तत्समम्
जंघाग्रं गुणमात्रं स्यात्साधाग्न्यंशं खुरास्तृतम् ५१
अपरे चोरुमूलं स्यात् व्यासमेवं क्रमात्कृतम्
अग्रमष्टांगुलं व्यासं मूलव्यासं षडंगुलम् ५२
जंघाग्रं चतुरंगुल्यं खुरव्यासं युगांगुलम्
ऊरुपञ्चांगुलायामं जानुदीर्घं द्विमात्रकम् ५३
जंघा पञ्चांगुलं दीर्घं त्रिमात्रं खुरमानकं
पुच्छव्यासं त्रिमात्रं स्यात् मूलाग्रे सार्धमात्रकम् ५४
पुच्छं जंघाग्रसीमान्तं वालयेत्तु विशेषतः
पुच्छाग्रे केशसहिते व्यासं वेदांगुलं भवेत् ५५
मूलाग्रं चैकमात्रं स्यात्केशदीर्घं युगांगुलम्
बीजायामं विशालं च सर्वं वह्न्यंगुलं क्रमात् ५६
द्विमात्रं घनवित्युक्तं शेफायामं युगांगुलम्
उदयादंगुलव्यासं घनमित्यभिधीयते ५७
स्थितं वा शयितं वापि पद्मे वा भद्रपीठके
सुधया चेष्टकागर्भं शिलाजं लोहजं तु वा ५८
स्वर्णजं ताम्रजं वापि लोहजं वृषभं वरम्
किञ्चित् हीनं न कर्तव्यं मानोन्मानप्रमाणके ५९
अथा कर्तुस्तु कर्तृत्वं तत्तल्लक्षणसंयुतम्
कर्तव्यं विपरीतं चेत् विपरीतफलप्रदम् ६०

वृषभलक्षणं ख्यातं शृणु वह्नेस्तु लक्षणं ६१

अथ अग्निदेवलक्षणम्

उत्तमदशतालेन कर्तव्यं अनलेश्वरम्
द्विवक्त्रं त्वेकहृदयं षट्कुक्षिं च द्विनासिकम् ६२
त्रिमेखलं त्रिपादं च सप्तजिह्वाभिरावृतम्
दक्षवक्त्रे चतुर्जिह्वं वामवक्त्रे द्विजिह्वकम् ६३
मेषारूढं चतुश्शृंगं जटामकुटमण्डितम्
दक्षिणे तु चतुर्हस्तं वामपार्श्वे त्रिहस्तकम् ६४
शक्त्यायुधं तथान्नं च स्रुक्स्रुवं दक्षिणे करे
तोमरं व्यजनं सामे घृतपात्रं विशेषतः ६५
वपुः स्वर्णनिभंख्यातं नेत्रं पिंगळवर्णकम्
प्रभामण्डलसंयुक्तं पद्मपीठोपरिस्थितम् ६६
दुकूलवसनोपेतं कल्पयेदनलेश्वरम्

अथ ब्राह्म्यादि नामानि

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ६७
वाराही च तथेन्द्राणी चामुण्डा सप्तमातरः
दक्षिणेऽदक्षिणे चैव वीरभद्रविनायकौ ६८

अथ वीरभद्रलक्षणम्

चतुर्भुजस्त्रिणेत्रश्च जटामकुटमंडितः
सर्वाभरणसंयुक्तः श्वेतवर्णो वृषध्वजः ६९
शूलायुधश्चाप्यभयं दक्षिणे तु करद्वये
गदा च वरदं चापि वामपार्श्वकरद्वये ७०
श्वेतपद्मासनासीनः वटवृक्षं समाश्रितः

अथ सप्तमातृलक्षणम्

चतुर्वक्त्रश्चतुर्बाहुसंयुक्तो हेमसन्निभः ७१

दक्षिणाभयशूलं च वरदं चाक्षमालिकाम्
शतपत्रासनासीना हंसवाहनकौतुका ७२
जटामकुटसंयुक्ता पीतांबरधरा वरा
ब्रह्माणी त्वेवमाख्याता ब्रह्मवृक्षं समाश्रिता ७३
चतुर्भुजा त्रिणेत्रा च अतिरक्ततनुप्रभा
शूलं चाप्यभयं सव्ये वामे च वरदं तथा ७४
जपमालां च दधती जटामकुटसंयुता
बिल्ववृक्षमधस्तात्तु वृषभध्वजसंयुता
ईश्वरेण समा ह्येषा माहेश्वरीति कीर्तिता ७५
चतुर्भुजा त्रिणेत्रा च रक्तवस्त्रसमन्विता
सर्वाभरणसंयुक्ता कौमारी मकुटान्विता ७६
शक्तिकुक्कुटहस्ता च वरदाभयपाणिका
मधूरध्वजवाही च उदुंबरं समाश्रिता ७७
शंखचक्रधरा देवी वरदाभयपाणिका
सुस्तना चारुवदना श्यामाभा च सुलोचना ७८
पीतांबरधरा देवी किरीटमकुटान्विता
राजवृक्षं समाश्रित्य गरुडध्वजवाहिनी ७९
वैष्णवीति समाख्याता विष्णुभूषणभूषिता
वराहवक्त्रसंयुक्ता नीलांबुदसमप्रभा ८०
करण्डमकुटोपेता चतुर्भुजसमन्विता
हलं च दक्षिणे हस्ते मुसलं वामहस्तके ८१
अभयं दक्षिणे हस्ते वरदं वामहस्तके
दधाना कृष्णवसना सर्वाभरणभूषिता ८२
करञ्जद्रुमसंयुक्ता महिषध्वजवाहिनी
चतुर्भुजा त्रिणेत्रा च सर्वाभरणभूषिता ८३

किरीटमकुटोपेता सुविद्रुमनिभानना
अंकुशं चाभयं सव्ये वामे शक्तिं वरं तथा  ८४
कल्पद्रुमं समाश्रित्य स्थिता चैव गजध्वजा
इन्द्राणीति समाख्याता चामुण्डालक्षणं शृणु
चतुर्भुजा त्रिणेत्रा च रक्तवर्णोर्ध्वकेशिनी  ८५
कपालशूलहस्ता च वरदाभयपाणिका
शिरोमालापरीता च पद्मपीठोपरिस्थिता  ८६
व्याघ्रचर्मांबरधरा नागचर्मावृतस्तनी
दंष्ट्राकराळवदना वटवृक्षं समाश्रिता  ८७
चामुण्डालक्षणं ह्येवमेवं कुर्यात्तु कल्पवित्
दक्षपादास्थितास्सर्वाः वामपादं तु लंबितम्  ८८
एवं वै सप्तमातृणां लक्षणं कथितं मया  ८९

इति काश्यपीये शिल्पशास्त्रे परिवारविधिर्नाम षट्चत्वारिंशः पटलः

## अथ सप्तचत्वारिंशः पटलः

### विनायकलक्षणम्

अथ वक्ष्ये विशेषेण विनायकस्य लक्षणम्
पादाद्युष्णीषसीमान्तं चतुष्षष्ट्यंशकं भवेत्  १
मूर्ध्नो मस्तकसीमान्तमंगुलद्वयमुच्यते
तस्माद्वै नेत्रसूत्रान्तं चतुर्मात्रमुदाहृतम्  २
नेत्रसूत्रान्मुखायाममष्टांगुलमुदीरितम्
गळायामं त्र्यंगुलं स्यात् हृदयान्तं षडंगुलम्  ३
हृदयान्नाभिपर्यन्तं षोडशांगुलमुच्यते
नाभेस्तु मेढ्रमूलान्तं षडंगुलमुदाहृतम्  ४

ऊरुदीर्घं षडर्धं स्यात् जानुदीर्घं गुणांगुलम्
जंघा चोरुसमं दीर्घं गुणांशं स्यात्तलोदयम् ५
सप्तांगुलं तलायाममंगुष्ठाग्रावसानकम्
पादांगुष्ठायतं द्व्यंशं सार्धांशं तु कनिष्ठिका ६
तर्जन्यादिकनिष्ठान्तं प्रत्येकं तु यवोनकम्
त्रयोदशांगुलं बाहुः प्रकोष्ठं तु नवांगुलम् ७
तर्जन्यनामिके द्वे च एकविंशयवायतम्
कनिष्ठांगुष्ठयोश्चैव दीर्घं सप्तदशं यवम् ८
द्वादशाष्टनवाष्टौ च सप्तसंख्यायवं क्रमात्
अंगुष्ठादिकनिष्ठान्तं व्यासमित्यभिधीयते ९
तत्तद्व्यासत्रिपादं स्यात् नखव्यासमुदाहृतम्
नखव्यासत्रिपादं स्यात् नखदीर्घं तु वृत्तवत् १०
एवं करतलव्यासं मणिबन्धं द्व्यार्धकम्
प्रकोष्ठकं युगांगुल्यं बाहुव्यासं षडर्धकम् ११
बाहुमूलं तु वस्वंशं हस्तकोष्ठांगुलान्तकम्
सप्तांगुलं तु तन्निम्नं मुखमध्ये दशांगुलं १२
हस्तमूलं षडंगुल्यं द्वाविंशत्यस्य दीर्घकम्
तदंगुल्यग्रविस्तारं सार्धमात्रं द्विजोत्तम १३
क्रमेण कृशता सप्ते तन्मध्ये सुषिरद्वयम्
वामदन्तायतं वेदमात्रमित्यभिधीयते १४
दक्षिणे दन्तमूलं स्यात् वामाख्यमतलं भवेत्
अधरस्य तु निष्क्रान्तं लंबनं द्वयमंगुलम् १५
नेत्रायामं विशालं च षड्यवं परिकीर्तितम्
कण्ठं भूतांगुलव्यासमुत्सेधं चैव तत् भवेत् १६
अर्धांगुलं घनं तस्य कर्णमूलं द्व्यांगुलम्

यद्वद्गजाननं तद्वत्कर्तव्यं तु मुखं द्विज १७
बाहुपर्यन्तविस्तारं द्वात्रिंशदंगुलं भवेत्
एकोनविंशदंगुल्यं कक्षान्तरमुदाहृतम् १८
स्तनान्तरं दशांगुल्यं हिक्कायास्तद्वदेव हि
स्तनाक्षं द्वियवव्यासं द्व्यंगुलं स्तनमण्डलम् १९
स्तनाधस्ताद्विशालं तु त्रिपञ्चांगुलमुच्यते
द्वाविंशदंगुलं ख्यातं मध्योदरविशालकम् २०
नाभिनिम्नं विशालं च अत्यर्धांगुलमुच्यते
लिंगायामं गुणांगुल्यं तस्यार्धं तस्य विस्तृतम् २१
मुष्कायामं विशालं च गुणांगुलमुदाहृतम्
ऊरुव्यासं तु भान्वंशं जानुव्यासं नवांगुलम् २२
जंघामूलविशालं तु सप्तमात्रमुदाहृतम्
नळकाविस्तृतं चापि सार्धं द्व्यंगुलमुच्यते २३
तलाग्रस्य तु विस्तारं सार्धषण्मात्रमिष्यते
पाष्ण्यायामं विशालं च गुणांगुलमुदाहृतम् २४
द्वादशाष्टर्षिषट्पञ्चयवं स्यात्तु यथाक्रमम्
अंगुष्ठादिकनिष्ठान्तं पादांगुळिविशालकम् २५
तत्त्रिपादं नखव्यासं तदर्धायतमण्डलम्
स्थानकं वासनं वापि पद्मपीठे विशेषतः २६
स्वदन्तं दक्षिणे हस्ते वामहस्तेकपिण्डके
मोदकं गजहस्ते तु अंकुशं दक्षिणे करे २७
वामहस्ते तु पाशं वा नागं वाप्यक्षमालिका
त्रिनेत्रं हेमसंकाशं दुकूलवसनान्वितम् २८
आभंगं समभंगं वा स्थानके तु प्रकल्पयेत्
आसनं स्वासनं चेत्तु वामपादं तु शाययेत् २९

मानान्तरे मूर्ध्नपादे पादौ तु कुटिकां विना
ईषद्वक्रं तनुर्वामे कर्तव्यं तु विशेषतः ३०
व्याळयज्ञोपवीतं च किरीटमकुटं तथा
करण्डमकुटं वापि जटामौळिकमेव वा ३१
सर्वाभरणसंयुक्तं महाकायं महोदरम्
एवं विनायकं ख्यातं शृणु षण्मुखलक्षणम् ३२

इति काश्यपीये शिल्पशास्त्रे विनायकलक्षणं नाम सप्तचत्वारिंशः पटलः

## अथ अष्टचत्वारिंशः पटलः

### षण्मुखलक्षणम्

पञ्चकालोत्तमेनैव स्कन्दं कुर्याद्विचक्षणः
मानोन्मानादिकं सर्वं प्रोक्तं वै स्कन्दलक्षणे १
द्विभुजं वा चतुर्हस्तं षड्भुजं भानुहस्तकम्
शक्तिं बाणं च खड्गं च चक्रं प्रासं प्रसारितम् २
सव्ये वामे तु पिंछं तु खड्गं कुक्कुटकं तथा
धनुर्दण्डं हलं चैव भानुहस्तान्विते स्थितं ३
षड्भुजस्य द्वयं खड्गं शक्तिर्दक्षिणपार्श्वके
खेटकं चाक्षमाला च कुक्कुटं वामहस्तके ४
चतुर्भुजेऽभयं शक्तिः दक्षिणे तु करद्वये
कुक्कुटं चाक्षमाला च वामहस्ते भवेत् बुध ५
द्विभुजं कुक्कुटं वामे शक्तिर्दक्षिणहस्तके
अनुक्तं यत्तु तत्सर्वं सोमास्कन्दोक्तवत् भवेत् ६
स्कन्दलक्षणमाख्यातं ज्येष्ठाविधिरतः परम्

### अथ ज्येष्ठालक्षणम्

द्विभुजाऽनलसंकाशा लंबोष्ठा कुंगनासिका ७
लंबमानस्तना कुक्षिलीना चारक्तवाससी
उत्पलं दक्षिणे हस्ते वामे तु करकान्विता ८
भद्रपीठे सुखासीना प्रलंबितपदद्वया
सर्वाभरणसंपन्ना विश्लथाबद्धमूर्धजा ९
काकध्वजसमायुक्ता ललाटे तिलकान्विता
तस्या दक्षिणपार्श्वे तु वृषो वै वृषवाहनः १०

ध्यानान्तरम्

द्विभुजे दक्षिणे हस्ते दण्डं वामे च सूचिका
लंबितं दक्षिणं पादं वाममुत्कुटिकासनम् ११
सुस्तना यौवनाढ्या च सर्वाभरणभूषिता
कृष्णाञ्जननिभा रक्तवस्त्रेणैव विभूषिता १२
श्वेतवर्णो महाकायः सर्वाभरणभूषितः
करण्डमकुटोपेतः दुकूलवसनान्वितः १३
वृषो वै दक्षिणे त्वेवं वामे त्वग्निस्तथा भवेत्
एवं ज्येष्ठा समाख्याता दुर्गालक्षणमुच्यते १४

अथ दुर्गालक्षणम्

चतुर्भुजा त्रिणेत्रा च सा तु श्यामनिभा परा
सौम्या पीतांबरोपेता पीनोरुजघनस्तना १५
करण्डमकुटोपेता सर्वाभरणभूषिता
अभयं दक्षिणे हस्ते कटकं वामहस्तके १६
परहस्ते तु सव्ये तु चक्रं वामे तु शंखकम्
वहन्ती समपादस्था पद्मपीठोपरि स्थिता १७
नागत्वक् स्तनबन्धा च रक्तकञ्चुकधारिणी
एवं दुर्गासमाख्याता विष्णुलक्षणमुच्यते १८

## अथ विष्णुलक्षणम्

विष्णुः किरीटकुटकटिसूत्रादिमण्डितः
पीतांबरधरः सौम्यः चतुर्भुजसमन्वितः १९
अभयं दक्षिणे हस्ते कटकं वामहस्तके
गदा पद्मं च वामे तु शंखं चक्रं च दक्षिणे २०
वहन्वै पद्मपीठस्थः सस्यश्यामनिभाकृतिः
आसीनो वा स्थितो वा स्याद्वामपार्श्वे श्रियान्वितः २१
श्रिया युक्तां केवलां वा विष्णुमूर्तिं प्रकल्पयेत्
ईषद्विकसिते पद्मे वहन्ती श्रीः करद्वये २२
विष्णोर्लक्षणमेवं स्यादिन्द्रलक्षणमुच्यते

## अथ इन्द्रलक्षणम्

एकवक्त्रः द्विहस्तश्च जातिलिंगसमप्रभः २३
करण्डमकुटोपेतः सर्वाभरणभूषितः
शक्तिं च दक्षिणे हस्ते वामहस्तेंकुशं वहन् २४
विस्तृतोरो दीर्घकण्ठः वामे शची समन्वितः
द्विनेत्रः सौम्यवदनः सिह्मासनोपरिस्थितः २५
आसीनो वा प्रकर्तव्यः गजारूढोप्यथापि वा
इन्द्रलक्षणमाख्यातमश्विनोर्लक्षणं शृणु २६

## अथ अश्विनोर्लक्षणम्

भद्रसिह्मासनासीनावश्विनौ विश्वरूपिणौ
दाडिमी पुष्पसंकाशावुभयौ सोमपायिनौ २७
फुल्लरक्तोत्पलाक्षौ च कमण्डलुसुधारिणौ
नासत्यौ दस्त्रनामानौ चूडामुकुटधारिणौ २८
करद्वयसमायुक्तौ स्त्रग्भूषणविभूषितौ
अभयं दक्षिणे हस्ते पुस्तकं वामहस्तके २९

प्रलंबद्दक्षिणपदौ वामे त्वुत्कुटिकान्वितौ
देवानां भिषजावेतौ द्वौ चिकित्साविधायकौ ३०
तयोः पार्श्वद्वये विप्र वामे च दक्षिणे क्रमात्
धृतिः सञ्जीविनी चैव संस्थितौ चामरान्वितौ ३१
पृष्ठे विशल्यकरणी संस्थिता चामरान्विता
वामे धन्वन्तरिश्चैव वामात्रेयस्तथैव च ३२
वीतरक्तनिभावेतौ संस्थितौ कृष्णवाससौ
खड्गखेटकसंयुक्तौ सर्वाभरणभूषितौ ३३
अश्विनौ तु समाख्यातौ वह्निः पूर्ववदेव हि

अथ पितृदेवतालक्षणम्

पितरः पीतवर्णाभाः वृद्धाः केशोर्ध्वबन्धनाः ३४
यज्ञसूत्रसमायुक्ताः द्विभुजाः श्वेतवाससः
नागाभरणसंयुक्ताः शशितुल्याननान्विताः ३५
फलकाभद्रपीठस्थाः पितरस्तु सुखासनाः
वामजानूपरिन्यस्त वामहस्तसमन्विताः ३६
सूची दक्षिणहस्तास्तु पितरस्तु समीरिताः
पितृणां लक्षणं प्रोक्तं शृणु वैवस्वतं ततः ३७

अथ यमलक्षणम्

द्विभुजः कृष्णवर्णश्च खड्गखेटकसंयुतः
कराळदंष्ट्रवदनः रक्तमाल्यानुलेपनः ३८
रक्तवस्त्रधरश्चोग्रः किरीटमकुटान्वितः
दीप्ताग्निसदृशाक्षश्च महामहिषवाहनः ३९
वैवस्वतस्य पार्श्वे तु समीपस्थौ ग्रहोग्रकौ
चित्रगुप्तः किन्नरश्च द्वारपार्श्वे तु संस्थितौ ४०
कृष्णश्यामनिभौ तौ च रक्तवस्त्रधरावुभौ

पीठपार्श्वे स्थितौ मृत्युसहितावुग्रतेजसौ ४१
नीललोहितसंकाशौ द्वे चामरकरे स्त्रियौ
पुरतस्संस्थितौ विप्र शर्मचर्मसमाह्वयौ ४२
यमस्सिह्मासनासीनः महिषो रोहितः तथा स्थितः
यमलक्षणमाख्यातं रोहिणीलक्षणं शृणु ४३

अथ रोहिणीलक्षणम्

द्विभुजा करण्डमकुटा रक्तवर्णा सुशोभना
सर्वाभरणसंयुक्ता नागहस्ता सितांबरा ४४
आसीना वा स्थिता वापि सप्तसंख्या हि रोहिणी
रोहिण्येवं समाख्याता नैर्ऋतिर्लक्षणं शृणु ४५

अथ नैर्ऋतिलक्षणम्

नैर्ऋतिर्नीलवर्णस्तु द्विभुजश्च महातनुः
खड्गं दक्षिणहस्ते तु वामहस्ते च खेटकम् ४६
पीतवस्त्रधरो रौद्रः कराळमुखदंष्ट्रकः
सर्वाभरणसंयुक्तः शवारूढो जगत्पतिः ४७
नैर्ऋतस्त्वेवमाख्यातः ततस्त्वप्सरसः शृणु

अथ अप्सरो लक्षणम्

अतिकान्तियुतारक्ताः केशभाराळकान्विताः ४८
नानाबन्धनसंयुक्ताः नानापुष्पैरलंकृताः
दुकूलवसनास्सर्वाः पीनोरुजघनस्तनाः ४९
सूक्ष्ममध्यास्सौम्यरूपाः किञ्चित्प्रहसिताननाः
नानागन्धानुलिप्तांगाः भद्रपीठोपरिस्थिताः ५०
समभंगयुतास्सप्तसंख्या अप्सरसां गणाः
एवमप्सरसः प्रोक्ताः वरुणस्त्वथ वक्ष्यते ५१

अथ वरुणलक्षणम्

वरुणः श्वेतवर्णस्तु द्विभुजः पाशहस्तकः
सर्वाभरणसंयुक्तः करण्डमुकुटान्वितः ५२
पीतवस्त्रधरशान्तः महाबलसमन्वितः
यज्ञसूत्रसमायुक्तः मकरासनसंस्थितः ५३
वारुणं लक्षणं प्रोक्तमृषीणां लक्षणं शृणु

अथ सप्तर्षिलक्षणम्

ऋषयः पीतवर्णास्तु नानावर्णांबरान्विताः ५४
वृद्धाश्च द्विभुजाश्शान्ताः जटाचूडासमन्विताः
चिबुकाहृदयान्ताश्च यज्ञोपवीतसंयुताः ५५
भस्मत्रिपुंड्रलसिताः स्थानकं वासनं तु वा
दण्डं दक्षिणहस्ते तु छत्रं वामकरोद्धृतम् ५६
छत्रदण्डौ विना वाथ सव्ये तु ज्ञानमुद्रिका
वामजानूपरिन्यस्त वामहस्तसमन्विताः ५७
भृगुरंगिरसोगस्त्यः वसिष्ठो गौतमस्तथा
विश्वामित्रो भरद्वाजः ऋषयस्सप्तकीर्तिताः ५८
ऋषीणां लक्षणं प्रोक्तं मरुल्लक्षणमुच्यते

अथ मरुल्लक्षणम्

द्विभुजस्तु महावीर्यः धूम्राक्षो धूम्रसन्निभः
ध्वजं वै दक्षिणे हस्ते वामहस्ते च दण्डधृक् ५९
सुकुञ्चितभुजयुतः शबळांबरभूषितः
नानालंकारसंयुक्तः विचलत्केशबन्धनः ६०
सिंहासनोपरिष्टात्तु शीघ्रयात्रोत्सुकः स्थितः
वायुरेवं समाख्यातः रुद्रलक्षणमुच्यते ६१

अथरुद्रलक्षणम्

चतुर्भुजास्त्रिणेत्राश्च जटामकुटमंडिताः

श्यामवस्त्रधरास्सर्वे शुक्लवर्णाः प्रकीर्तिताः ६२
स्थानके समपादाश्च पद्मपीठोपरिस्थिताः
सर्वाभरणसंयुक्ताः सर्वपुष्पैरलंकृताः ६३
अभयं परशुः सव्ये वामे स्यात् हरिणो वरम्
महादेवश्शिवो रुद्रः शंकरो नीललोहितः ६४
ईशानो विजयश्चेशः देवदेवो भवोद्भवः
कपाली शस्त्विति ज्ञेयाः रुद्रास्त्वेकादश स्मृताः ६५
रुद्राणां लक्षणं प्रोक्तं सोमलक्षणमुच्यते

अथ सोमलक्षणम्

सोमस्सिंहासनासीनः कुन्दशंखनिभद्युतिः
प्रभामण्डलसंयुक्तः द्विभुजस्सौम्यवक्त्रकः ६६
आसीनो वा स्थितो वापि कुमुदोत्पलहस्तकः
हेमयज्ञोपवीतांगः सर्वाभरणभूषितः ६७
शुक्लवस्त्रधरश्शान्तः सर्वपुष्पैरलंकृतः
सोमलक्षणमाख्यातं क्षेत्रेशलक्षणं शृणु

अथ क्षेत्रपालकलक्षणम्

त्रिणेत्रः क्षेत्रपालस्तु सत्वादिगुणयोगतः ६८
श्वेतो रक्तस्तथा कृष्णः सात्विकादिगुणैर्भवेत्
द्विचतुर्हस्तयुक्शान्तः राजसष्षड्भुजान्वितः ६९
तामसश्चाष्टदोर्दण्डः त्रिणेत्रस्समपादकः
स्थानके पद्मपीठं स्यात् भद्रपीठमथापि वा ७०
शूलं तु दक्षिणे हस्ते कपालमितरे वहन्
द्विभुजस्त्वेवमाख्यातः चतुर्हस्तस्त्वथोच्यते ७१
परहस्ते तु सव्ये स्यात् खट्वांगं खड्गमन्यके
पूर्वहस्तद्वये वापि अभयं वरदं तथा ७२

पूर्ववत् परहस्तौ द्वौ घराटा स्याद्वामहस्तके
सात्विकं ह्येवमाख्यातं राजसं शृणु सुव्रत ७३
शूलं खड्गं च घंटा च दक्षिणे तु करत्रये
खेटकं च कपालं च नागपाशं च वामके ७४
तामसे तु धनुर्बाणं दक्षिणे दक्षिणे तरे
शेषं राजसवत् ख्यातं रक्तकेशोर्ध्वमराडलः ७५
उग्रदृष्टिसमायुक्तः नानानागविभूषितः
त्रिणेत्रश्चाग्निरूपश्च कल्प्यस्स्यात् क्षेत्रपालकः ७६
क्षेत्रेशलक्षणं प्रोक्तं ईशस्य लक्षणं शृणु

अथ ईशानलक्षणम्

ईशो वै द्विभुजः ख्यातः सर्वाभरणभूषितः
जटामकुटसंयुक्तः शुक्लवस्त्रद्युतिः स्थितः ७७
शुक्लयज्ञोपवीतश्च शुक्लपद्मोपरि स्थितः
शूलं दक्षिणहस्ते च कपालं वामहस्तके ७८
वहन्नीशस्समाख्यातः शृणु भास्करलक्षणम्

अथ आदित्यलक्षणम्

द्विभुजाः पद्महस्ताश्च रक्तपद्मासने स्थिताः ७९
रत्नमंडलसंयुक्तकरराडमकुटान्विताः
रक्तांबरधरास्सर्वे सर्वाभरणभूषिताः ८०
छन्नवीरसमायुक्ताः भास्करा द्वादश स्मृताः
विकर्तनो विवस्वांश्च मार्ताराडो भास्करो रविः ८१
लोकपालः प्रकाशश्च लोकसाक्षी त्रिविक्रमः
आदित्यश्च तथा सूर्यः अंशुमाली दिवाकरः ८२
एते वै द्वादशादित्याः उत्तरादिक्रमात् स्थिताः
एवं षोडशसंख्याताः द्वात्रिंशदथ वक्ष्यते ८३

अथ अनन्तलक्षणं

सौम्यश्चतुर्भुजोऽनन्तः सर्वाभरणभूषितः
जपापुष्पनिभाकारः करण्डमुकुटान्वितः ८४
सितवस्त्रधरश्शान्तः त्रिणेत्रः पद्मसंस्थितः
अभयं वरदं ढक्कां शूलं च धारयन् करैः ८५

अथ अर्कलक्षणम्

अर्कश्चतुर्भुजश्शान्तः सर्वाभरणभूषितः
हिरण्यसदृशप्रख्यः दुकूलवसनान्वितः ८६
अभयं वरदं चापि खड्गं खेटं करैर्वहन्
सुस्थितः पद्मपीठे तु सूर्यमेवं प्रकल्पयेत् ८७

अथ भवलक्षणम्

भवश्चतुर्भुजश्शान्तः जटामकुटमण्डितः
अतिरक्तसमप्रख्यः सर्वाभरणभूषितः ८८
हिरण्यसदृशप्रख्यः दुकूलवसनान्वितः
अभयवरदोपेत शूलपाशधरो भवः ८९

अथ मरुल्लक्षणं

भोगिहस्तद्वयोपेतः सौम्यात्मा च द्विनेत्रकः
अत्यन्तसुन्दरी शान्ताः सर्वाभरणभूषिताः ९०
नानागन्धानुलिप्ता वा नानापुष्पापशोभिताः
करण्डमकुटोपेताः पद्मपीठोपरिस्थिताः ९१

अथ अप्सरोलक्षणम्

किञ्चिद्विलग्नकुक्ष्यश्च पीनोरुजघनस्तनाः
दुकूलपट्टदेवांगैः नानावस्त्रधरा पराः ९२
सस्यश्यामनिभाकारा रक्तोत्पलधराः करे
आजानुलंबहस्ताश्च सर्वाश्च समभंगिकाः ९३

अथ गौरीलक्षणम्

सूक्ष्मानिलनिभा शान्ता हेमवस्त्रधरा वरा
चतुर्भुजा त्रिणेत्रा च सर्वाभरणभूषिता ९४
अभयं वरदं टङ्कं शूलं च दधती करैः
गौरी लक्षणमाख्यातं यथा सकललक्षणे ९५
तथैव कारयेद्धीमान् स्थापयेत्केवलात्मिकाम्

अथ शर्वलक्षणम्

शर्वश्चतुर्भुजश्शान्तः सर्वाभरणभूषितः ९६
जटामकुटसंयुक्तः शंखकुन्देन्दुसन्निभः
अभयं वरदं खड्गं खेटकं च वहन् करैः ९७
पद्मपीठोपरिष्ठस्तु स्थानकः शर्व एव हि

अथ विरिञ्चिध्यानम्

चतुर्वक्त्रश्चतुर्बाहुः पिंगाक्षः सर्वभूषणः ९८
कृष्णाजिनोत्तरीयश्च यज्ञसूत्रसमन्वितः
शुक्लवस्त्रधरश्शान्तः सकटीसूत्रमेखलः ९९
शुक्लमाल्यानुलेपश्च कर्णकुण्डलमण्डितः
दक्षिणे चाक्षमालां च कूर्चं चैव तु धारयन् १००
कमण्डलुं कुशं वामे दक्षिणे स्रुक्स्रुवौ तथा
अज्यस्थालीं कुशांश्चैव वामहस्ते तु धारयन् १०१
अभयवरदौ पूर्वहस्तौ वाथ द्विजोत्तम
आसने तूभयांघ्री च रोधयेत्तु परस्परम् १०२
मेढ्रमूलोपरिष्टात्तु वामहस्तोर्ध्ववक्त्रकम्
सव्यहस्तं च तस्योर्ध्वे तत्र न्यस्त्वा समास्थितम् १०३
दक्षिणे चाक्षमालां च वामहस्ते कमण्डलुम्
सरस्वती दक्षपार्श्वे सावित्री वामपार्श्वके १०४

आसीने वा स्थिते वापि पद्मपीठोपरि द्विज

अथ शिवोत्तमलक्षणम्

शिवोत्तमः श्वेतवर्णः चतुर्भुजसमन्वितः १०५
सर्वाभरणसंयुक्तः शुक्लवस्त्रोपवीतकः
नेत्रद्वयसमायुक्तः करण्डमकुटान्वितः १०६
अभयं वरदं शूलं पाशं चापि वहन्करैः
पद्मपीठोपरिष्टात्तु स्थानकः समपादकः १०७

अथ भृगुलक्षणम्

भृगुश्शुकनिभश्शान्तः शुक्लवस्त्रधरस्तथा
करण्डमकुटोपेतो हस्तद्वयसमन्वितः १०८
अभयवरदोपेतः सर्वाभरणभूषितः
स्थानको वासनो वापि पद्मपीठो भृगुश्शुभः १०९

अथ ईशागस्त्यकौशिकैकनेत्रलक्षणम्

पूर्वमेवोदितस्त्वीशः तथागस्त्यं च कल्पयेत्
अगस्त्यवत्कौशिकं च स्थापयेत्स्थापकोत्तमः ११०
एकनेत्रश्चतुर्बाहुः नेत्रत्रयसमन्वितः
क्षौमवस्त्रधरश्शान्तः बन्धूककुसुमप्रभः १११
जटामकुटसंयुक्तः सर्वाभरणभूषितः
अभयवरदोपेतः टंकशूलसमन्वितः ११२

अथ विघ्नेश सरस्वती लक्षणम्

विघ्नेशं पूर्ववत्कृत्वा स्थापयेद्देशिकोत्तमः
सरस्वती चतुर्हस्ता श्वेतपद्मासनान्विता ११३
जटामकुटसंयुक्ता शुक्लवर्णा सितांबरा
यज्ञोपवीतसंयुक्ता मुक्ताहारा सुलोचना ११४
व्याख्यामुद्रां चाक्षसूत्रं दक्षिणे तु करद्वये

पुस्तकं कुण्डिकां वामे त्रिणेत्रा चारुरूपिणी ११५
ऋग्यजुस्सामभिश्चापि मुनिभिस्सेविता वरा
एवं लक्षणसंयुक्ता वाग्देवी परिकीर्तिता ११६

अथ लक्ष्मी लक्षणम्

लक्ष्मीः पद्मासनासीना द्विभुजा काञ्चनप्रभा
हेमरत्नोज्वलद्दिव्यकर्णकुण्डलमण्डिता ११७
सुयौवना सुरम्यांगा कुञ्चितभ्रूः सुविभ्रमा
रक्ताक्षी पीनगण्डा च कञ्चुचूदस्तनद्वयी ११८
शिरसो मण्डनं शंखचक्रसीमन्तपंकजम्
अंबुजं दक्षिणे हस्ते वामे श्रीफलमिष्यते ११९
सुमध्या विपुलश्रोणी शोभनांबरवेष्टिता
मेखलाकटिसूत्रा च सर्वाभरणभूषिता १२०

अथ एकरुद्रपशुपतिवसुलक्षणम्

एकाक्षसदृशस्त्वेकरुद्रः कार्यो विशेषतः
पशुपतिं पूर्ववच्च स्थापयेत् देशिकोत्तमः १२१
धरो ध्रुवश्च सोमश्च आपस्त्वनल एव च
अनिलश्चैव प्रत्यूषः प्रभावश्च तथैव च १२२
वसवोष्टौ कीर्तिता वै रक्तवर्णा द्विदोर्युताः
पीतांबरधरास्सर्वे आसीना वा स्थिताश्च वा १२३
खड्गखेटकहस्तास्ते सर्वाभरणभूषिताः
करण्डमुकुटोपेताः रौद्रास्सर्वे प्रकीर्तिताः १२४

अथ महादेव त्रिमूर्तिधनदेंद्रलक्षणम्

कर्तव्यः पशुपतिवत् महादेवो द्विजोत्तम
एकरुद्रवत् कर्तव्यस्त्रिमूर्तिर्द्विजसत्तम १२५
धनदस्सर्वयक्षेशस्सर्वाभरणभूषितः

तप्तकाञ्चनसंकाशः हस्तद्वयसमन्वितः १२६
वरदाभयहस्तश्च गदा वा वामहस्तके
पद्मपीठोपरिष्ठस्तु द्विनेत्रो नरवाहनः १२७
रक्तांबरस्सौम्यमुखश्शंखपद्मनिधी युतः
शंखपद्मनिधी द्वौ च भूताकारौ महाबलौ १२८
आसीनौ पद्मपीठे तु पद्महस्तौ द्विजोत्तम
करण्डमकुटोपेतौ सितवासोत्तरीयकौ १२९
दक्षिणेऽदक्षिणे शंखनिधिः पद्मनिधिः क्रमात्
धनदस्य तु वामे च देवीं कुर्यात्सलक्षणाम् १३०
धनदो ह्येवमाख्यातः प्राग्वदिन्द्रं प्रकल्पयेत्

अथ कालाग्निरुद्रश्रीकण्ठलक्षणम्

कालाग्निरुद्रमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना १३१
चतुर्भुजस्त्रिणेत्रश्च ज्वालामालोपशोभितः
खड्गखेटकसंयुक्तः शशांकार्धधरः परः १३२
रक्तवस्त्रधरो रौद्रस्सर्वाभरणभूषितः
रक्तोर्ध्वकेशसंयुक्तस्सिह्मासनोपरिस्थितः १३३
चतुर्भुजस्त्रिणेत्रश्च नीलोत्पलसमप्रभः
करण्डमकुटोपेतस्सर्वाभरणभूषितः १३४
अभयवरदोपेतः टंकशूलधरः परः
रक्तवस्त्रसमायुक्तः पद्मपीठोपरि स्थितः १३५

अथ नागदेवलक्षणम्

श्रीकण्ठो ह्येवमाख्यातः नागदेवस्त्वथोच्यते
त्रिणेत्रश्चतुर्भुजस्सौम्यः रक्ताभश्च सितांबरः १३६
अभयवरदोपेतः परहस्ते तु नागधृक्
करण्डमकुटोपेतः नागः पञ्चफणान्वितः १३७

सर्वाभरणसंयुक्तः पद्मपीठोपरि स्थितः
अथ भीमभूमिलक्षणम्
भीमश्चतुर्भुजो रौद्रः सर्वाभरणभूषितः १३८
अभयं वरदं चैव शूलं पाशं च धारयन्
सितवस्त्रधरश्चैव उग्रदृष्टिः सदंष्ट्रकः १३९
सस्यांकुरनिभा भूमिः नीलाळकसमन्विता
करण्डमकुटोपेता सर्वाभरणभूषिता १४०
पीतांबरधरा चैव प्रसन्नवदनान्विता
पद्मं वाप्युत्पलं वापि वहती हस्तयोर्द्वयोः १४१
पद्मपीठोपरिष्ठा तु असीना वा स्थिताथवा
अथ शिखण्डमरुल्लक्षणम्
शिखण्डः कञ्जनाभस्तु चतुर्भुजसमन्वितः १४२
खड्गखेटकसंयुक्तः पद्मपीठोपरिस्थितः
मरुद्गणा धूम्रवर्णाः द्विभुजाश्च समुद्गराः १४३
केशभारसमायुक्ताः सर्वाभरणभूषिताः
दुकूलवसनास्सर्वे नानापुष्पैरलंकृताः १४४
टंकशूलसमायुक्ताः पीनोरुजघनस्तनाः
पादपीठोपरिष्टात्तु अष्टौ च स्युर्मरुद्गणाः १४५
अथ उग्रलक्षणम्
उग्रश्चतुर्भुजो रौद्रः रक्तवस्त्रसमन्वितः
करण्डमकुटोपेतस्सर्वाभरणभूषितः १४६
अभयवरदोपेतः टंकशूलधरः परः
स्थानकः पद्मपीठं तु शुक्लवस्त्रधरः शुचिः १४७
अथ शनैश्चरलक्षणम्
शनैश्चरः कृष्णवर्णा द्विभुजोऽसितवस्त्रकः

करण्डमकुटोपेतस्सर्वाभरणभूषितः १४८
दण्डस्स्याद्दक्षिणे हस्ते वरदो वामहस्तके
स्थानकः पद्मपीठं तु आसीनो वा विशेषतः १४९
ईषत्कुञ्चितपादस्स्यादीषत् ह्रस्वतनुस्स्मृतः
एवं लक्षणमाख्यातं पीठस्य लक्षणं शृणु १५०

अथ पीठलक्षणम्

भानुद्वयांगुलं कारमुत्सेधं भानुमात्रकम्
मेखलात्रयसंयुक्तं वेदमात्राविशालकं १५१
गुणांगुलसमुत्सेधं पद्माञ्चं तु गुणांगुलम्
षडंगुलं पद्मतारं शेषेर्धं कंपनीव्रकम् १५२
शिलाभिरिष्टकाभिर्वा सुधया वा प्रकल्पयेत्
परिवारपीठमेवं महापीठविधिं शृणु १५३

अथ महापीठलक्षणम्

प्रासादस्य तु विस्तारं यत्तद्दण्डमिहोच्यते
मूलहर्म्यं समालभ्य षडष्टदण्डमानके १५४
दशद्वादशदण्डे वा मनुदण्डावसानके
षोडशेष्टादशे वापि महापीठं प्रकल्पयेत् १५५
अथवान्यप्रकारेण पीठस्थानं विधीयते
तृतीय वा चतुष्पञ्च सालेग्रायाममध्यमे १५६
महापीठं प्रकर्तव्यं तस्य लक्षणमुच्यते
मूलधान्मस्तु द्वारोच्चमुत्तमं पीठविस्तृतम् १५७
त्रिपादं मध्यमं प्रोक्तं तुंगार्धमधमं मतम्
शुद्धद्वारस्य विस्तारमधमं पीठमुच्यते १५८
द्विगुणं मध्यमं प्रोक्तं त्रिगुणं श्रेष्ठमुच्यते
अथवा व्योमहस्तं स्यादधमं पीठविस्तृतम् १५९

द्विहस्तं तु मध्यमं स्यात् त्रिहस्तं श्रेष्ठमुच्यते
तद्विस्तारसमं तुंगं सप्ताष्टनवविंशतिः १६०
उपानोऽत्र द्विभागं स्यात् षडंशं जगती भवेत्
कुमुदोच्चं तु भूतांशं कंपमेकांशमुच्यते १६१
वेदांशं कर्णमानं स्यादूर्ध्वकंपं शिवांशकम्
महापट्टी गुणांशं तु द्विभागं वा विशेषतः १६२
वेदांशं पद्मतुंगं तु द्विभागं कर्णिकोदयम्
अथवा कर्णिकोत्सेधं गुणांशं द्विजसत्तम १६३
पद्मोच्चं पञ्चभागं तु महापट्टी द्विभागकम्
उपानोच्चं शिवांशं तु शेषं पूर्ववदेव हि १६४
अथ पीठायतं विप्र धारातलयुतांबुजम्
तदूर्ध्वे पद्ममानं तु पीठोत्सेधांशमुच्यते १६५
अधिष्ठानोक्तमार्गेण वेशनिष्क्रान्तमाचरेत्
पद्मतारे युगांशं वा भूतांशं कर्णिका ततम् १६६
पद्मतारं युगाश्रं वा वृत्तं वाष्टाश्रमेव वा
कलात्रयाश्रं कर्तव्यं हंसगारुडलांछितम् १६७
लोहजं शैलजं वापि इष्टकामयमेव वा
सुधया वेष्टकागर्भं नाना चित्रैर्विचित्रितम् १६८
भूमेव्यामकरैर्व्याळैः वृषभैश्च विभूषितम्
नानावर्णैर्विचित्रं वा भूषयेद्धेमराजतैः १६९
पीठव्यासे तु षट्सप्तवसुनन्दांशकेपि वा
अंशमानेन वा पीठमुपपीठोक्तवत् कुरु १७०
तदूर्ध्वे तु महापीठमुक्तव्यासोदयान्वितम्
उपपीठोक्तवत्पीठं कर्तव्यं वा द्विजोत्तम १७१
आमोदं च पूर्वदळे पृथिवी तत्वरूपिणम्

प्रमोदं च याम्यदळे यत्तत्स्यादनिलात्मकम् १७२
सुमुखं पश्चिमदळे तत् भूतं स्याज्जलात्मकम्
दुर्मुखं सौम्यदिग्भागे वायुतत्वात्मकं तथा १७३
अविघ्नं कर्णकोर्ध्वे तु व्योमात्मकमुदीरितम्
तामसं चानलदळे राजसं नैर्ऋते दळे १७४
सात्विकं वायुदिग्भागे विघ्नकर्तारमीशके
एवं भूतगुणाकारमात्मतत्वमुदाहृतम् १७५
स्वर्गं भूमिरन्तरिक्षं सर्वं भूतगुणात्मकम्
आत्मेत्युक्तं तु तत्सर्वं महापीठं द्विजोत्तम १७६
तामसादिनिवृत्यर्थं नित्यं बल्यन्तमर्चयेत्
तस्मादात्मोपहाराय नित्यं कुर्यात्प्रदक्षिणम् १७७
भूमिप्रदक्षिणं त्वादौ द्वितीयं ह्यन्तरिक्षकम्
स्वर्गप्रदक्षिणं पश्चात्कृतं तद्वासिनां हितम् १७८
जगदार्तिविनाशार्थं कल्पयेत् साधकोत्तमः
पश्चिमाभिमुखे हर्म्ये किञ्चित् भेदं वदाम्यहम् १७९
वृषस्थाने कुमारं च कौमारे वृषभं न्यसेत्
वारुणे तु महापीठं शेषं पूर्ववदाचरेत्
परिवारविधिः प्रोक्तः वक्ष्यते लिंगलक्षणम् १८०

इति काश्यपीये शिल्पशास्त्रे परिवारविधिर्नाम अष्टचत्वारिंशः पटलः

## अथैकोनपञ्चाशत्तमः पटलः

## शिवलिङ्गलक्षणम्

अथ वक्ष्ये विशेषेण शिवलिंगस्य लक्षणम्
संसारविलये भूताः लयं गच्छन्त्यशेषतः १

यथा सृष्टिस्तथा तस्मात्स्त्रष्टृत्वाल्लिंगमुच्यते
संसारे निष्कलं शान्तं मनोवाचामगोचरम् २
मुक्तिदं सर्वभूतानां स्वात्मनः परमं विना
सर्वाभिव्यापि तद्गुह्यं सर्वलोकैकनायकम् ३
तस्माद्वै सृष्टिकाले तु शान्तितत्वसमुद्भवः
तच्छान्तेः शक्तिस्संभूता तस्यानादस्य संभवः ४
तस्माद्बिन्दुस्समुत्पन्नः नादं सादाख्यमुच्यते
बिन्दुर्मनोन्मनी ख्याता तस्मादीश्वरसंभवः ५
ईश्वरात्तु महेशस्य सृष्टिस्तस्मात्तु वैष्णवम्
तस्मात्प्रजेशसंभूतिः प्रजेशात्तु विशेषतः ६
त्रीणि चैवाथ त्रिंशच्च त्रिशतं त्रिसहस्त्रकम्
देवता ऋृषयश्चैव दानवासुरयोनयः ७
संभवो ह्युदितो विप्र तेष्वादौ त्रीणि निष्कळम्
शिवं तत्सकलं ख्यातं मिश्रं नादं च बिन्दुकम् ८
नादं लिंगाकृति ज्ञेयं बिन्दुः पीठमुदाहृतम्
लिंगं शिवमयं ख्यातं पीठं शक्त्यात्मकं मतम् ९
तस्मात् शिवात्मिका चैव साभिन्ना चानलोष्णवत्
जगदार्तिविनाशार्थं सर्वप्राणिहिताय वै १०
देवादीनां हितार्थाय ध्यानपूजा निमित्तकम्
लिंगयोनिप्रभेदेन सादाख्यं तत्वमुद्बभौ ११
सर्वेषामुद्भवार्थं तु प्रोच्यते लिंगलक्षणम्
तल्लिंगं त्रिविधं ख्यातं चलं चैवाचलं तथा १२
चलाचलं च विख्यातं क्रमेणैव विशेषतः
रत्नजं लोहजं वाथ लिंगं कृत्वा सयोनिकम् १३
लिंगद्रव्येतरं वाथ योनिं कृत्वा सलक्षणम्

शिरसोवर्तनोपेतं लक्षणाद्धारवर्जितं १४
लिंगाकारमशेषं तु कृत्वा लिंगोदयार्धकम्
उदये लोकभागं वा वेदांशांशमथापि वा १५
पीठे निवेशयेत् शेषं दृश्यमानसमन्वितम्
गमागमक्षमं चेष्टदेशे न्यस्योद्धृतेः क्षमम् १६
यत्तल्लिंगं चलं ख्यातं वेशदृश्यमथाचलम्
स्थापितं चैव यत्पीठं वेशदृश्यं चलाचलम् १७
आत्मजं सूत्रसंयुक्तं बाणलिंगं तु तद्विदुः
तेष्वादावचलं लिंगलक्षणं वक्ष्यतेऽधुना १८
सुमासतिथिनक्षत्रलग्नवारे शिलाग्रहः
आचार्यः शिल्पिसंयुक्तः शिलाग्रहणमाचरेत् १९
दिव्यान्तरिक्षभौमानि निमित्तान्युपलक्षयेत्
वायसो दक्षिणं वामादागतश्च तथैव च २०
श्येनो वै दक्षिणा द्वामः गृध्रो मांसेन संयुतः
कन्यागोदर्शनं चैव गवामागमनं तथा २१
दधिसंपूर्णकुंभश्च क्षीरकुंभस्तथैव च
पुष्पाणि पुष्पस्रक् चापि सुतवत्यस्तथा स्त्रियः २२
अन्नं मांसस्तथाहारः शिवभक्तिपरायणः
ज्वालानलश्च दीपश्च जलपूर्णो घटस्तथा २३
सालंकारो गजश्चैव वेश्या चात्यन्तसुन्दरी
शुभान्येतानि भौमानि अशुभं विपरी ततम् २४
उल्कापातो दिशां दाहः महावातप्रवर्तनम्
अशुभान्यन्तरिक्षाणी भौमाशोभनमुच्यते २५
मुक्तकेशा नरा नार्यः कीर्णकेशास्तथैव च
तैलाभ्यक्ताश्च नग्नाश्च काषायवसनान्विताः २६

शून्यं चैवाथ मृद्भाराडं तैलपात्रं तथैव च
छिन्ननासिककर्णाश्च हीनांगाश्चाधिकांगकाः २७
पुत्रसीनास्तथा नार्यः विधवा च तथैव च
बहुभद्याश्च भौमानि एकानि वर्जयेत् शुभे २८
शुभं चेत् गमनं कुर्यादशुभं चेद्विवर्जयेत्
अशुभेत्वग्निमास्तीर्य शिवेनैव शताहुतीः २९
समिदाज्यौदनैः कुर्यान्नागान्नं नागभूषणम्
दत्वा शिवं नमस्कृत्या चार्यो गच्छेत्तु शिल्पिना ३०
पर्वते सागरे तीर्थे क्षेत्रे चैव वने पुनः
क्षीरवृक्षसमीपे च देवहर्म्यसमीपके ३१
नदी तटाकतीरे वा शिल्पी संग्राहयेत् शिलाम्
अन्यस्थाने न गृह्णीयात् गृहीते स्याद्विनाशनम् ३२
श्वेता रक्ता च पीता च कृष्णा चैव चतुर्विधा
गोक्षीरशंखकुन्देन्दुमुक्तास्फटिकसन्निभा ३३
मल्लिकाकुसुमप्रख्या श्वेता सप्तविधा स्मृता
जपा किंशुकपुष्पाभा इन्द्रगोपसमप्रभा ३४
जातिलिंगनिभाकारा शशरक्तसमप्रभा
दाडिमीपुष्पसंकाशा बन्धूककुसुमप्रभा ३५
रक्ता सप्तविधा ख्याता एवमेव द्विजोत्तम
सुवर्णसदृशाकारा चंपकप्रसवोपमा ३६
आरग्वधसुमप्रख्या हरिद्रासदृशा तथा
कोरराडपुष्पसंकाशा जंबीरफलसन्निभा ३७
हरिताळसमाभासा शिला पीता च सप्तधा
महिषाक्षाञ्जनाभासा नीलोत्पलसमप्रभा ३८
भृंगमायूरकराठाभा मषीपत्रसमा तथा

राजा वर्तनिभा कारा कृष्णमुद्गसमप्रभा ३९
ह्रस्वमुद्गसमाकारा कृष्णा दश विधा शिला
श्वेतरक्तपीतकृष्णाः विप्रादीनां क्रमात्स्मृताः ४०
धर्मार्थकाममोक्षांश्च दद्युस्सततमेव च
परेषामवरं श्रेष्ठं परेषामवरं विना ४१
प्रतिलोमानुलोमाभ्यां हीनयोगं न गृह्यताम्
आचार्यशिल्पिनौ चैव सितवस्त्रधरावुभौ ४२
शुल्कमाल्यानुलिप्तांगौ पञ्चांगभूषणान्वितौ
कुठारादीनि संगृह्य शिलां गत्वा समाहितौ ४३
यस्मिन्देशे शिला शेते तां कृत्वा तु प्रदक्षिणम्
दोषवर्ज्यां शिलां दृष्ट्वा परिच्छेद्य विशेषतः ४४
वर्षा तपाग्निगन्धां च सुकीर्णां क्षारवारिणा
दुर्देशस्थां तटस्थां च कर्मान्तरे तु योजिताम् ४५
शर्कराढ्यां सपंकां च झर्झरां रूक्षसंयुताम्
रेखाबिन्दुकळंकादि संयुक्तां परिवर्जयेत् ४६
सूत्रवद्वा तदाकारा रविरश्मिसमायुता
वर्षपा तवदाकारा रेखा वै त्रिविधा स्मृता ४७
जंबूफलसमाकारा द्राक्षायास्सदृशाथवा
अन्यद्वा वृत्तसंकाशा त्रिविधा बिन्दुसंज्ञिता ४८
कृष्णलोहनिभाकारा कृष्णभ्रमरसन्निभा
शिखिपिंछसमाकारा सकळंका चतुर्विधा ४९
खर्जूरपत्रसंकाशा दूर्वास्तंभनिभा तथा
वैणवांकुरसंकाशा लूतापादवदायता ५०
अन्याश्मसु सिता रेखा सर्वसंपत्समृद्धिदा
कृष्णाकृष्णा विनाशाय श्वेतकृष्णा तथैव हि ५१

तस्मात्सर्वप्रयत्नेन परिग्राह्यास्तथेतराः
कृष्णा च हरिता ग्राह्या सितवर्णा विशेषतः ५२
खर्जूरपत्रसदृशा दूर्वास्तंभाकृतिश्शुभा
अतिकृष्णाऽशुभा ख्याता गोधान्यधननाशदा ५३
सकळंकारो गदा स्यात् राजराष्ट्रविनाशनं
सबिन्दुका पुत्रनाशदारिद्र्य श्रीविनाशदा ५४
एवं परीक्ष्य बहुधा गृह्णीयात् लक्षणान्विताम्
बाला च युवतिर्वृद्धा पुंस्त्रीनपुंसकं तथा ५५
स्वरैकाकृतिभेदैश्च परिच्छेदविधिं शृणु
खनने सध्वनिर्ह्रस्वा शिला बाला इति स्मृता ५६
घण्टाध्वनिसमा दीर्घा युवतिः सा प्रकीर्तिता
विवृतध्वनिसंयुक्ता या सा वृद्धा च कीर्तिता ५७
घण्टाध्वनिसमोन्नादा दीर्घा सा पुंशिलोदिता
ताळशब्दसमाकारा दीर्घा या स्त्री शिला तु सा ५८
अस्निग्धा झर्झरा रूक्षा स्वरहीना नपुंसका
स्वरैरेवं समाख्याता आकृत्या भेद उच्यते ५९
चतुरश्रा च वस्वश्रा स्त्री शिलेति प्रकीर्तिता
आयताश्रा च वृत्ता च दशद्वादशकोणका ६०
पुंशिला सा समाख्याता सुवृत्ता सा नपुंसका
दशाग्रां द्वादशाग्रां च बालां वृद्धां च वर्जयेत् ६१
लिंगं कुर्यात् पुंशिलाभिः स्त्री शिलाभिश्च पिण्डकाम्
नपुंसकशिलाभिस्तु पादाधारं समाचरेत् ६२
कृतं च विपरीतं यत् तत्सदा कर्तृनाशनम्
प्रागग्रां वोदगग्रां वा शिलां संगृह्य देशिकः ६३
प्रागग्रे पश्चिमं मूलमुदगग्रे तु दक्षिणे

प्राच्यसौम्य गतं यत्तत् लिंगाग्रं तत्प्रकीर्तितम् ६४
अधोभागं मुखं ख्यातं पृष्ठमूर्ध्वगतं भवेत्
एवं परीक्ष्य संग्राह्य गव्यैः क्षाळ्य हृदा बुधः ६५
सत्य मंत्रेण संस्थाप्य गन्धपुष्पादिभिर्यजेत्
तस्यास्तु शांकरे देशे शान्तिहोमं तु कारयेत् ६६
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
समिधो हृदयेनैव मूलेनाज्यं तु होमयेत् ६७
चरुहोममघोरेण पुरुषेणैव तण्डुलम्
तिलमीशानमंत्रेण सर्षपं कवचेन तु ६८
शतं तदर्धं पादं वा प्रत्येकं जुहुयात्क्रमात्
स्विष्टकृतं चाप्यग्नेति पूर्णाहुतिमथाचरेत् ६९
ततो वह्निं समुद्वास्य पूजापर्युषितं त्यजेत्
शिलाच्छेदकरं शस्त्रमस्त्रमंत्रेण पूजयेत् ७०
अपसर्पणमुच्चार्य शिलाच्छेदनमाचरेत्
तदूर्ध्वं शिल्पिकार्यं तु स्थपत्यादिः समाचरेत् ७१
गर्भगेहप्रमाणं च द्वारमानं तथैव च
स्तंभमानं तलमानं हस्ततालांगुलं तथा ७२
लिंगमानं ध्रुवं सप्तभेदास्ते प्रत्यनेकधा
गर्भगेहे तु पञ्चांशे गुणांशं श्रेष्ठमुच्यते ७३
गर्भार्धं मध्यमं ख्यातं तयोर्मध्येष्टभाजिते
श्रेष्ठमध्याधमं लिंगं प्रत्येकं त्रिविधं भवेत् ७४
अथवा गर्भगेहं तु नवभागविभाजिते
गर्भगेहसमुत्थानमुत्तमादित्रयं त्रयम् ७५
शुद्धद्वारसमं श्रेष्ठं त्रिद्व्यंशं तु कनीयसम्
तयोर्मध्येऽष्टभागे तु नन्दभेदं द्विजोत्तम ७६

स्तंभायामसमासे तु नवभागविभाजिते
श्रेष्ठमध्याधमान्येवं नवधा प्रोच्यते द्विज ७७
प्रासादे त्वादिभूमौ तु स्तंभभागसमं हि तत्
अधिष्ठानोदये विप्र स्तंभमानवदाचरेत् ७८
एकहस्तं समारभ्य स्वाष्टांशांश विवर्धनात्
नवहस्तावधिर्यावत्सङ्ख्या षष्टिः सपञ्चका ७९
पञ्चहस्तविमानादि हर्म्ये हस्तवशं नयेत्
पञ्चहस्तादधो हर्म्ये लिंगं हस्तवशं विना ८०
हस्तादि गुणहस्तान्तं विकल्पाभासहर्म्ययोः
त्रिहस्तात् षट् करान्तं तु लिंगं छन्दविमानके ८१
षट् करादि नवान्तं तु लिंगं भूतिगृहान्वितम्
एवं हस्तवशात्ख्यातं तालमानमथोच्यते ८२
एकादि नवतालान्तमेकैकतालवर्धनात्
लिंगे हि नवसंख्याः स्युः कल्प्यं जाती तरालये ८३
त्रयोदशांगुलं ग्राह्यं यावन्नवशतांगुलम्
तावदेकोनपञ्चाशल्लिंगं मानांगुलेन तु ८४
त्रिभागसहितं लिंगं हस्तक्षीणं न कारयेत्
हस्तमानात्क्षयं लिंगं वृत्ताकारमशेषकम् ८५
वेदं नवांशेत्वुदये विष्टरे योजयेत् बुधः
शेषं तु दृश्यमानं स्याद्विकल्पाभासहर्म्ययोः ८६
विष्टरे वेशयेल्लिंगं विकल्पाभासकं विना
त्रयोदशांगुलं लिंगं शैलजं तु न कारयेत् ८७
एवं त्वनेकभेदेन प्रोच्यते लिंगमानकम्
नागरं द्राविडं लिंगं वेसरं च वदाम्यहम् ८८
लिंगोदये तु वेदांशे एकांशं कन्यसस्तमम्

तुंगत्र्यंशे शिवांशं तु विस्तारं श्रेष्ठमुच्यते ८९
तयोर्मध्येष्टभागे तु नवधा तारमुच्यते
अथोदये कलांशे तु पञ्चांशं शान्तिकं भवेत् ९०
वेदांशं पौष्टिकं ख्यातं गुणांशं जयदं भवेत्
आभिचारे द्विभागं स्यात् व्यासमेवं चतुर्विधम् ९१
एवं त्रयोदशव्यासं नागरे तु विधीयते
लिंगोच्च द्विनवांशे तु रसभूतयुगांशकम् ९२
गुणांशं शान्तिकादिः स्यात् द्राविडे च चतुर्विधम्
वेसरे लिंगतुंगे तु विंशत्यंशविभाजिते ९३
अष्ट वा सप्त षट् पञ्च भागैर्व्यासं प्रकल्पितम्
शान्तिकं पौष्टिकं चैव जयदं च क्रमेण तु ९४
वेसरं च चतुर्भेदं हर्म्यलिंगं च पिण्डिका
पादाधारशिला चैव एकजातिस्वसंकरम् ९५
यत्रैवं कल्पितं लिंगं वृद्धिहेतुरुदाहृतम्
अन्योन्यसंकरश्चेत्तु राज्ञो दुःखभयावहम् ९६
तस्मात्सर्वप्रयत्नेन संकरं न समाचरेत्
लिंगानां नागराद्येवं ख्यातमायादिकं शृणु ९७
लिंगस्योत्सेधमानं तु मानांगुलेन भाजयेत्
मात्राच्छेदं प्रवृद्ध्या वा हान्या वा परिहारयेत् ९८
श्रेष्ठान्तराधमैः पूर्णैः मात्रापूर्णं परिग्रहेत्
उत्सेधमात्रमष्टाभिर्वर्धिते ऋृक्षसंख्यया ९९
हृते चाप्यवशिष्टं स्यादश्विन्यादि द्विजोत्तम
नवभिर्गुणिते सप्त हृते त्वेकादि वारकम् १००
अनलैर्गुणिते चाष्टहृते योनिरुदाहृतम्
अष्टभिर्वर्धिते भानुहृते त्वायमुदाहृतम् १०१

नवभिर्गुणिते नाडी हृते शेषमृणं भवेत्
युगवृद्धे नवहृते त्वंशकं तस्करादयः १०२
आयाधिकं क्षयक्षीणं संपदामास्पदं सदा
ध्वजस्सिह्मो वृषो हस्ती शुभयोनिरुदाहृता १०३
नृपस्य कर्तुर्जन्मर्क्षात् लिंगऋक्षावसानकम्
तथैव वास्तुऋक्षादि गणयेत्तु शुभावहम् १०४
जन्मत्रयं च युग्मं च वेदाष्टऋतुनन्दकाः
शुभावहास्तु विहिताः शेषकास्त्वशुभावहाः १०५
लग्नाष्टमं च वैनाशं तथैव नरराक्षसम्
वर्जितास्त्वशुभा ह्येते यत्नतः परिवर्जयेत् १०६
भानुवारादिसंयुक्ता सूर्यर्क्षादि चतुश्चतुः
रिपुत्वं मरणं नाशममृतं च यथाक्रमम् १०७
तस्करं च मणिं षण्डमंशकं परिवर्जयेत्
शेषांशकं परिग्राह्यं शुभमानं तु संग्रहेत् १०८
समलिंगं वर्धमानं शैवाधिकं च स्वस्तिकम्
सर्वतो भद्रलिंगं च सार्वदेशिकमेव च १०९
धारालिंगं मुखलिंगं लिंगमष्टविधं भवेत्
समलिंगं तु विप्राणां नृपाणां वर्धमानकम् ११०
शैवाधिकं तु वैश्यानां शूद्राणां स्वस्तिकं भवेत्
सर्वेषामितरत् लिंगं सर्वकामफलप्रदम् १११
एक एव महादेवः लिंगभेदात् नृणां हितः
इष्टायामविशालेन चतुरश्रीकृतं पुरा ११२
पश्चाद्भागत्रयं कल्प्यं अनेन विधिना बुधः
चतुरश्रमधो भागं ब्रह्मभागमथोच्यते ११३
मध्ये तु वसुकोणं स्याद्विष्णवंशं तत्प्रकीर्तितम्

ऊर्ध्वभागं तु वृत्तं स्यात्तच्छैवांशं निगद्यते ११४
अंशं प्रत्यभिधानात्तु अशेषं तु शिवांशकम्
शिवात्मा चेद्विशिष्टं चाप्यंशभेदाख्यकं कथम् ११५
वृक्षस्य मूलं मूर्धाग्रं शाखापत्रं फलं त्विति
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ११६
यथेन्द्रिय गुणैरेव एकैकांशं प्रकीर्तितम्
यथांशभेदो युक्त्यैव प्राणिभेदो न विद्यते ११७
तथैव शिवलिंगस्य भागं प्रत्यभिधानकम्
लिंगतारं युगाश्रं तु कृत्वा कर्णार्धकं ग्रहेत् ११८
कोणात्कोणं तु संकल्प्य तेन मानेन देशिकः
बहिर्भागं तु संतक्षेत् अष्टाश्रं तद्भवेदिति ११९
अथवा लिंगतारं तु सप्तभागं विभाजिते
युगांशं मध्यपट्टं स्यात् छेदयेत्तद्बहिर्बुधः १२०
अथवा वसुभागे तु मध्यपट्टं रसांशकम्
छेदयेत्तद्बहिर्भागं वस्वश्रं तु त्रिधैव हि १२१
अष्टाश्रे वसुविस्तारं चतुरश्री कृते सति
तत्कोणार्धं तु वस्वश्रं कोणात्कोणं तु लाशयेत् १२२
यद्बाह्ये तु परिच्छेद्य कलाश्रं तद्भवेदिह
कलाश्रेऽश्रं तु संच्छेद्य वृत्ताकारं तु तद्भवेत् १२३
अष्टाश्रादीनि विन्यासं एवमेव हि तन्यते
लिंगवामे युगांशे तु एकांशं चतुरश्रकम् १२४
मध्ये व्योमं तु वस्वश्रमग्रे वृत्तं शिवांशकम्
समलिंगमिति ख्यातं विप्रादीनां तु वृद्धिकृत् १२५
भानुद्व्यंशे तदायामे सप्तांशं चतुरश्रकम्
अष्टांशमष्टकोणं च नन्दांशं वृत्तमुच्यते १२६

षट् सप्तवसुभागं वा पञ्चषट्सप्त एव वा
चतुष्पञ्च षडंशं वा वर्धमानं चतुर्विधम् १२७
लिंगायामे दशांशे तु गुणांशं चतुरश्रकम्
वस्वश्रं चैव तद्धग्र गुणांशं चतुरश्रकम् १२८
शिवाधिकादिदं ख्यातमथवा स्यात्प्रकारयेत्
वेदवेदशरांशं वा पञ्चपञ्चषडंशकम् १२९
षट् षट् सप्तांशकैः वाथ शैवाधिक्यं चतुर्विधम्
लिंगायामे नवांशे तु चतुरश्रं द्विभागया १३०
वस्वश्रं तु गुणांशेन वेदांशं वृत्तमुच्यते
स्वस्तिकं ह्येवमाख्यातं सर्वतो भद्रमुच्यते १३१
मूलादग्रं सुवृत्तं तु लिंगोत्तुंग त्रिभागिके
स्थलेवेशं तदेकांशं व्योमांशं योनिबन्धितम् १३२
पूजाभागं तदेकांशं सर्वतो भद्रमेव हि
सार्धदेशिकलिंगं तु वृत्ता कारमशेषतः १३३
भूतवेदगुणांशं वा लिंगोच्चे तु विभाजिते
पीठे तु वेशयेदंशं शेषं पूजांशमुच्यते १३४
सार्वदेशिकलिंगं तु एवमेव प्रकल्पयेत्
समलिंगोग्रयं नन्दभागं कृत्वा विचक्षणः १३५
षडंशैर्वर्तुळं नाहं सप्तांशं मध्यनाहकम्
वसुभागमधो नाहं यत्तत्रैराशिकं भवेत् १३६
सार्वजात्यर्हकं शस्तं त्रैराशिकमिदं परम्
मूलादाग्रं युगांशं तु धारालिंगं च तच्च वै १३७
समेतु मूलं वेदाश्रं शेषं वस्वश्रमेव हि
चतुरश्रमधो भागमष्टाश्रं मध्यमं भवेत् १३८
पूजाभागं कलाश्रं तु धारालिंगं त्रिधा भवेत्

तदश्रं मूर्धपर्यन्तं यवार्धं वा यवोन्नतम्  १३९
समलिंगं तु धारा स्यात्सर्वप्राणिहितावहं
धारालिंगसमं ख्यातं मुखलिंगं विशेषतः  १४०
शिवांशाधिकलिंगे तु मुखलिंगं प्रकीर्तितं
पूजाभागत्रयं कृत्वा ऊर्ध्वभागं मुखं भवेत्  १४१
पञ्चमूर्ध्नचतुर्वक्त्रं ग्रीवा चैकसमायुतं
कर्णोष्ठौ चादशाक्षं च सर्वलक्षणसंयुतम्  १४२
लिंगाकारमधस्तस्य तस्यार्धं पीठिकान्वितम्
अथवा रुद्रभागं तु चतुर्विंशच्छतांशके  १४३
ग्रीवाधिकं तद्रुद्रांशमुष्णीषोच्चमुदाहृतम्
केशान्तमग्निभागं स्यात् युगांशमथवाधिकम्  १४४
नेत्रान्तं च पुटान्तं च हन्वन्तं वर्धमानकम्
प्रत्येकं त्रियवाधिक्यमथवास्याद्युगांशकम्  १४५
हन्वादिगळमानं तु चत्वार्येवमुदाहृतम्
यत्तु केशान्तमानं तत्कण्ठोच्चमिति शब्द्यते  १४६
शेषं लिंगा कृति ख्यातं कल्पयेत् लक्षणान्वितम्
चतुर्वक्त्रैकवक्त्रं वा चतुर्बाहु द्विबाहु वा  १४७
स्तनसूत्रोपरिष्टात्तु बिंबलक्षणसंयुतम्
हिक्कासूत्रोपरिष्टाद्वा शेषं लिंगा कृतिर्भवेत्  १४८
मुखलिंगमिति ख्यातं नृपाणामभिवृद्धिकृत्
विष्कंभमष्टधा कृत्वा मूले मध्ये तथाग्रके  १४९
भागहीनं तु संकल्प्य स्थूलमूलमुदाहृतम्
ह्रासयेत् शिवभागादि शिरस्स्थूलमुदाहृतम्  १५०
एतदार्षमिति ख्यातं ऋषिभिः पूजितं वरम्
गुणाश्रं पञ्चकोणं च षट्सप्तद्वादशाश्रकम्  १५१

दशाश्रं च नवाश्रं चाप्य श्रेतरमनोहरम्
फलकादर्पणाकारमेकरेखमरेखकम् १५२
शिरसोवर्तनाहीनं मानोन्मानैरनन्वितम्
सेव्यं स्वायंभुवं चेति ख्यातं देवैः सुपूजितम् १५३
बाणेन पूजिता भोगं बाणलिंगमुदाहृतम्
स्थूलं सूक्ष्मं शिरोमूलं क्रमेण परिपठ्यते १५४
उन्नतं तु मुखं ख्यातं मधुवर्णमनन्दिनम्
विष्टरे तु प्रवेशांशं सार्वदेशिकलिंगवत् १५५
लोहजं रत्नजं चैव सार्वदेशिकलिंगवत्
लिंगभेदस्समाख्यातः शिरसो वर्तनं शृणु १५६
लिंगमूर्धादि केशान्तं शिरसो वर्तनं भवेत्
तस्मात् लिंगोदये कुर्यात् शिरसो वर्तनं द्विज १५७
छत्राकारं भवेत्पूर्वं कुक्कुटाण्डं द्वितीयकम्
तृतीयं त्रिपुराकारमर्धचन्द्रं तुरीयकम् १५८
यस्य लिंगस्य विष्कंभमष्टधा विभजेत् बुधः
ऊर्ध्वादर्धांशमालंब्य प्रथमं छत्रशीर्षकम् १५९
द्वात्रिंशद्विभजेत्तारमूर्ध्वाद्भूतांशलंबितम्
छत्राभं तत् द्वितीयं स्यात् सप्तांशं तत् तृतीयकम् १६०
चतुर्थं तु नवांशं स्यात् छत्राभं तु चतुर्विधम्
द्विजानां च नृपाणां च छत्राभं सर्वकामदम् १६१
सर्वेषामपि लिंगानां छत्राभं तु प्रशस्तकम्
व्यासे द्वात्रिंशदंशे तु मनुपक्षकलांशकैः १६२
सप्तदशांशकैश्चैव कुक्कुटाण्डं चतुर्विधम्
वर्धमानं च लिंगं तु प्रशस्तं क्षत्रियार्हकम् १६३
द्वात्रिंशांशे शिरस्तारे धर्मरुद्रांशकैस्तथा

भानुत्रयोदशांशैस्तु त्रिपुराभं चतुर्विधम् १६४
शिवाधिकं च लिंगं तु शस्तं वैश्यार्हकं मतम्
त्रिंशत्रिंशे शिरस्तारे द्वाविंशत्येकविंशतिः १६५
विंशदेकोनविंशांशैरर्धचन्द्रं चतुर्विधम्
स्वस्तिकाख्यं च लिंगं तु प्रशस्तं शूद्रवृद्धिदम् १६६
सार्वदेशिकलिंगानामन्येषां च विशेषतः
छत्रादिशीर्षा कारं तु कर्तृजाति वशान्नयेत् १६७
दैविकार्षलिंगानां तेष्वष्टाश्रमशीर्षकम्
शिरसो वर्तनोत्सेधं गुणभागविभाजिते १६८
युक्त्यादंशं तु लिंगोच्चे शिरसो वर्तनान्वितम्
उष्णीषमानमाख्यातं शिरोदानं तदुच्यते १६९
मूर्ध्नमध्यात्तद्दशान्तं परितो वर्तयेत्क्रमात्
यावल्लंबनसीमान्तं मूर्ध्निमध्यात्क्रमानतम् १७०
छत्रशीर्षं तु लिंगानां मूर्ध्नामध्यान्नतं भवेत्
चक्रत्रयसमायुक्तं कर्तव्यं च त्रिशीर्षकम् १७१
चक्रहीनं तु यच्छीर्षं एवं केवलमुच्यते
शीर्षं च लिंगतारोच्चे उक्तादन्यन्न कारयेत् १७२
उक्तादन्यत्कृतं चेत्तु राजराष्ट्रभयावहम्
तस्मात्सर्वप्रयत्नेन उक्तमार्गेण कारयेत्
लिंगलक्षणमाख्यातं पिण्डिकालक्षणं शृणु १७३

इति काश्यपीये शिल्पशास्त्रे लिंगलक्षणं नाम एकोनपञ्चाशत्तमः पटलः

## अथ पञ्चाशत्तमः पटलः

## पीठलक्षणम्

अथातो नागरादीनां लिंगानां पीठलक्षणम्
आदौ तु वक्ष्यते विप्र सकलानां ततो विदुः १
शैलजे शिलया पीठं सुधयेष्टकयापि वा
दारुजे दारुजं वाथ इष्टकामयमेव वा २
रत्नलोहजलिंगानां सयोनिर्लोहजं तु वा
लिंगोदयसमं पीठं विस्तारेणोत्तमं भवेत् ३
पूजांशोच्चसमं पीठतारं कन्यसमुच्यते
तयोर्मध्येष्टभागे तु उत्तमादित्रयं त्रयम् ४
पीठव्यासं त्रिधाभज्य द्विभागं चोत्तमोत्तमम्
व्यासार्धमधमोत्सेधं तयोर्मध्येष्टभाजिते ५
नवधा पीठतुंगं च उत्तमादित्रयं त्रयम्
क्रमेण कथितं विप्र नागरं चैवमुच्यते ६
लिंगस्योच्चसमं व्यासं श्रेष्ठं तन्नवभाजिते
नवधा विस्तृतं ख्यातं ब्रह्मविष्णवंशयोरपि ७
उदयं नवधाभज्य द्विभागं वा तलांशकम्
एकांशं वा विशेषेण स्थलांशे तु निवेशयेत् ८
शेषं पीठोदयं ख्यातमेवं द्राविडमाचरेत्
पूजांशस्य परीणाहसमं श्रेष्ठं विशालकम् ९
परीणाहे कलांशे तु भान्वंशं मधमं ततम्
तयोर्मध्येष्टभागे तु नवधा पीठविस्तृतम् १०
विष्णुभागसमोच्चं तु पीठं कन्यसमुच्यते
सपादं श्रेष्ठमानं तु तयोर्मध्येष्टभाजिते ११
नवधा पिंडिकातुंगं वेसरं ह्येवमाचरेत्
अथवा लिंगविष्कंभं त्रिगुणं पीठविस्तृतम् १२
अथवा लिंगविष्कंभं चतुरश्री कृते सति

तत्कर्णाद्द्विगुणं पादं सार्धं द्विगुणमेव वा  १३
त्रिगुणं वा विशालं तु पीठानां तु विशेषतः
गर्भगेहद्विभागैकं चतुर्भागैकमेव वा  १४
पीठव्यासं समाख्यातं विष्णुभागसमोन्नतम्
सामान्यं नागरादीनां लिंगानां पिंडिकास्त्विमे  १५
उपानबाह्ये विस्तारं सर्वेषां तु विशेषतः
तदष्टनवदशांशसीनं वाग्रविशालकम्  १६
विष्णुभागसमोत्तुंगं सपादं सार्धमेव वा
सामान्यं पिंडिकानां तु नागरादिसमुन्नतम्  १७
लिंगानां सकलानां तु सामान्यं पीठलक्षणम्
सुधाया नवांशे तु व्योमांशं कन्यसोदयम्  १८
युगांशं श्रेष्ठमानं तु तयोर्मध्येष्टभाजिते
नवधा पीठतुंगं तु तस्य विस्तारमुच्यते  १९
पीठतुंगसमं व्यासमधमं पीठमुच्यते
द्विगुणं चोत्तमं व्यासं तयोर्मध्येष्टभाजिते  २०
नवधा विस्तृतं ख्यातं सकलानां विशेषतः
पिंडिका गोमुखोपेता लिंगानां तु विधीयते  २१
गोमुखरहितं पीठं सकलानां विशेषतः
समाश्रं समपृष्ठं वा लिंगानां तु विधीयते  २२
सायुताश्रमवृत्तानां प्रतिमानं समं तु वा
चतुरश्राप्यवृत्ता च प्रतिमानां विधीयते
पद्मपीठं भद्रपीठं वेदिकापरिमण्डलम्  २३
पीठं चतुर्विधं ख्यातमलंकारं द्विजोत्तम
कलांशं विभजेत्तुंगमुपानोच्चं द्विभागकम्  २४
भूतांशोच्चमधःपद्मं कर्णं पादुकसादृशं

ऊर्ध्वपद्मं तु वेदांशं द्विभागं पट्टिकोदयम् २५
शिवांशं घृतवार्युच्चं षोडश दळसंयुतम्
दळमध्ये क्षुद्रदळं व्यग्रपादमहादळम् २६
अर्धांगुलदळोच्चाग्रं मानांगुलेन सुव्रत
लिंगदेहांगुलार्धं वा दळाग्राणां समुच्छ्रयम् २७
पीठतारत्रिभागैकं गोमुखं दीर्घमुच्यते
तद्दीर्घसदृशं तस्य मूलतारमुदाहृतम् २८
मूलतारत्रिभागैकं तदग्रविपुलं भवेत्
मूलादाग्रं क्रमात्क्षीणं तत्पुनर्व्याससादृशं २९
त्रिपादं वा तदर्धं वा त्रिभागैकांशमेव वा
व्यासत्रिभागभागं तु जलमार्गविशालकम् ३०
पट्टिकार्धसमं निम्नं तस्मादेवसमं तु वा
उपानाद्यंगवेशं च नीप्रं सौन्दर्यमानयेत् ३१
अधिष्ठानां गवद्वेशं नीप्रं वा परिकल्पयेत्
पद्मपीठं समाख्यातं भद्रपीठमिहोच्यते ३२
कृत्वा षोडशधोत्सेधं भागेनोपानमुच्यते
जगत्युच्चं तु वेदांशं गुणांशं कुमुदोदयम् ३३
शिवांशं पट्टिकामानं गुणांशं कण्ठमानकम्
तदूर्ध्वं कंपमेकांशं भागं तु पट्टिकोदयम् ३४
शश्यंशं घृतवारि स्यात् भद्रपीठमिदं परम्
पीठोच्चे तु कलांशे तु द्विभागं पादुकोदयम् ३५
गुणांशं जगतीमानं कुमुदोच्चं तु तत्समम्
व्योमांशं कंपमानं तु कण्ठमानं त्रिभागकम् ३६
तस्योर्ध्वं कंपमेकांशं गुणांशं पट्टिका भवेत्
एकांशं घृतवारि स्यात् वेदिभद्रं तथोच्यते ३७

भद्रमेवं समाख्यातं वेदपीठमथोच्यते
त्रयोदशांशं पीठाच्चं त्रिभागं पादुकोदयम्  ३८
तदूर्ध्वं पद्मकं तुल्यं कंपमंशेन कारयेत्
द्विभागं कंपमानं तु ऊर्ध्वकंपं शिवांशकम्  ३९
तदूर्ध्वपद्मं पद्मांशं पट्टकं चैव तत्समम्
घृतवार्युदयं व्योमभागेन परिकल्पयेत्  ४०
अथोदये तु वस्वंशे उपानोच्चं शिवांशकम्
एकांशं घृतवारि स्यात् शेषं वेदिगुणाश्रयम्  ४१
वेदिका पीठमाख्यातं तदेवाद्मांशपट्टिका
कर्तव्यं तु त्रिधैवं हि वेदिकापीठमुच्यते  ४२
पद्मं वा भद्रपीठं वा वृत्तं तु परिमण्डितम्
अधिष्ठानांगवत्पादं पीठांगं परिकल्पयेत्  ४३
उपपीठांगवत् भागं तत्तस्मान्माप्रकीर्तितम्
जयदं चतुरश्राभं योन्याकारं प्रजाकरम्  ४४
शान्तिकं धनुराकारं गुणाश्रं रिपुनाशनम्
वृद्धिहेतुश्च वृत्तं स्यात्पञ्चाश्रं पुष्टितुष्टिदम्  ४५
षट् कोणं रोगनाशं स्यादेवमेव क्रमाद्विदुः
एष्वाकारेषु पीठांगान्प्रागुक्तविधिना कुरु  ४६
द्रव्ये तुष्टेष्टपीठं तु जीर्णधारे द्विजोत्तम
पूर्वाकृतिर्यथा कार्यं तथा कुर्यात्पुनः पुनः  ४७
पश्चादन्याकृतातीत कर्तव्ये कर्तृ नाशनम्
तस्मात्सर्वप्रयत्नेन पूर्वाकारं प्रकल्पयेत्  ४८
सापेक्षं यत्तु तत्तारात्सपादं सार्धमेव वा
आजयं मुखभद्रं वा भद्रं चोपसभद्रवत्  ४९
लिंगानां सायतं पीठं न कुर्यात्तु कदाचन

समाश्रं समवृत्तं च सायतं वा तदन्यकम्  ५०
सर्वं च सक्रमोपेतं कर्तव्यं संपदां पदम्
पिंडिकालक्षणं प्रोक्तं पादशैलोदयं शृणु  ५१
इति काश्यपीये शिल्पशास्त्रे लिंगपीठलक्षणं नाम पञ्चाशत्तमः पटलः

## अथैकपञ्चाशत्तमः पटलः
## पादशैलादिलक्षणम्

अथ वक्ष्ये विशेषेण पादशैलादिलक्षणम्
लिंगतारत्रयं व्यासं तत्रिपादसमुन्नतम्  १
तत्समानायतं चापि तन्मध्ये भाजिते
तंगं तु नवधा प्रोक्तं पादाश्रं नागरं विदुः  २
गर्भगेहविशालार्धं श्रेष्ठं व्यासमुदाहृतम्
तदर्धं कन्यसंप्रोक्तं तयोर्मध्येऽष्टभाजिते  ३
नवधा तद्विशालं स्यात् नागरं तु विधीयते
लिंगव्यासद्वयाधिक्यं व्यासं तद्वसुभाजिते  ४
एकांशमवटे निम्नं लिंगमूलवदा कृति
नवरत्नप्रमाणेन नवकोष्ठं प्रकल्पयेत्  ५
अन्यतः समतां कुर्यात् आधाराख्यशिला सह
तदस्मात्पीठसीमान्तं नन्द्यावर्तशिलोदयम्  ६
लिंगपीठसमानं वा एकद्वित्र्यंगुलाधिकम्
तान्यवृत्तशिलाव्यासं नागरेषु विधीयते  ७
पीठव्यासान्यते वाथ द्राविडाक्षाग्निकाधिकम्
लिंगव्यासे नवांशे तु पीठादेकैकवर्धनात्  ८
नन्द्यावर्तशिलाव्यासं नवधा वेसरं हि तत्

लिंगस्य परितः कल्प्यं चत्वारि चतुरश्रकम् ९
चतुरश्चोच्चतायामं तेषां दीर्घमुदाहृतम्
उत्तराग्रं तु प्राग्भागे प्रागग्रं दक्षिणे न्यसेत् १०
पश्चिमे चोत्तराग्रं च प्रागग्रं चोत्तरे न्यसेत्
शांकरे प्रथमस्याग्रमनलाग्रं द्वितीयकम् ११
तृतीयं मरुतोदग्रं स्यात् वायुमूलं चतुर्थकम्
नन्द्यावर्तशिलास्त्वेवं योज्यं कल्पदलोदके १२
तदूर्ध्वेष्टबन्धनं कुर्यात्स्थापयेत्पिण्डिकां बुधः
सुधया वज्रबन्धं वा लिप्यपीठं प्रयोजयेत् १३
एकांशं चोत्तमं पीठं द्वाभ्यां वै मध्यविष्टरम्
त्रिचतुः पञ्चभिर्वाथ कन्यसं पीठमुच्यते १४
पीठानां तु तदूर्ध्वे तु मश्मैकेन समाचरेत्
बहुवस्तुगळाधस्तात्पीठसन्धैर्गळैर्गुरुः १५
गळाधस्तात् वृषौ द्व्यश्रौ तत्पूर्वे वा परे न्यसेत्
त्रयश्चेदाश्रयं त्वेकं वामेऽवामे परे द्वयम् १६
चत्वारि चेद्द्रोणयुगं चतुरश्रं प्रकल्पयेत्
षट् पञ्च चैव कर्तव्यं पिंडिकालक्षणान्वितम् १७
सुधयाष्टबन्धनैर्वापि निश्छद्रं सुदृढं कुरु
इष्टकाभिश्शिलाभिर्वा दृढं स्यात्सुधयान्वितम् १८
लोहजं रत्नजं वापि दारुजं चैक एव वा
सर्वेषां बन्धनं चाष्टबन्धमित्यभिधीयते १९
विष्णुभागोर्ध्वसीमान्तं पिंडिकोर्ध्वं समुन्नयेत्
नतोन्नतं न कर्तव्यं कृतं चेत्कर्तृनाशनम् २०
नपंसकशिलाभिस्तु पीठाधस्ताच्छिलां नयेत्
एवं ब्रह्मशिलादीनि प्रोक्तान्येव विशेषतः २१

इति काश्यपीये शिल्पशास्त्रे पादशैलादि लक्षणं नाम
एकपञ्चाशत्तमः पटलः

अथ द्विपञ्चाशत्तमः पटलः
लक्षणोद्धारलक्षणम्

अथ वक्ष्ये विशेषेण लक्षणोद्धारलक्षणम्
लिंगस्य मुखनिर्माणं लक्षणोद्धारमुच्यते १
प्रासादस्याग्रतो वापि शांकरे दक्षिणेपि वा
नवाष्टसप्तहस्तं वा मंडपं चतुरश्रकम् २
षोडशस्तंभसर्वालंकारसंयुतं
मंडपस्य त्रिभागैकं तन्मध्ये वेदिका ततम् ३
हस्तमात्रं तदुत्सेधं दर्पणोदरसन्निभम्
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् ४
नानाधूपैश्च दीपैश्च नानापुष्पैरलंकृतम्
शालिभिः स्थंडिलं कुर्यात् वेदिकायां विशेषतः ५
तंडुलैश्च तिलैर्दर्भैः लाजैः पुष्पैरलंकृतम्
अधमत्रयलिंगानामेवं मंडपमाचरेत् ६
शेषाणां लिंगदीर्घं स्यात् वेदिकाविस्तृतं यथा
तस्यैव त्रिगुणव्यासं मंडपस्य विशालकम् ७
अन्यत्सर्वमलंकारं प्रागिवैव समाचरेत्
वेद्यूर्ध्वं शाययेल्लिंगं प्राक् शिरश्चोर्ध्ववक्त्रकम् ८
परितोष्टौ घटान्नयस्य सकूर्चान्सापिधानकान्
ससूत्रान्नववस्त्राढ्यान् गंधतोयेन पूरितान् ९
सापिधानान्सशोभाढ्यान्लोकपालादिदैवतान्
गंधपुष्पैश्च धूपाद्यैरर्चयेत्तस्य मानतः १०

लिंगमानस्य वामे तु पिंडिकांडं विभावयेत्
रक्तवस्त्रादि नावेष्ट्य लिंगपीठं समर्चयेत्  ११
वेदिकायां स्वतन्त्रे तु कुंडं वा स्थंडिलं कुरु
अग्न्याधानादिकं सर्वमग्निकार्योत्तमाचरेत्  १२
लिंगपीठं भवेद्वामे अग्निं कृत्वा तु सव्यतः
आवोराजादिमन्त्रेण प्रत्येकाष्टशताहुतीः  १३
ब्रह्मवृक्षसमिद्भिश्च होमं कृत्वा विधानतः
आपो हिष्ठेतिमन्त्रेण इदं विष्णुश्च मंत्रतः  १४
ब्रह्मजज्ञानमंत्रेण आज्यतन्त्रं समाचरेत्
चरुहोममघोरेण प्रत्यगष्टादशाहुतीः  १५
एवं जागरणं रात्रौ प्रभाते सन्मुहूर्तके
देशिकस्तु शुचिर्भूत्वा सकली कृतविग्रहः  १६
सितवस्त्रोत्तरीयाढ्य सितामल्यानुलेपनः
सर्वलक्षणसंयुक्तः शिवद्विजकुलोद्भवः  १७
स्थपतिश्च शुचिर्भूत्वा यज्ञसूत्रोत्तरान्वितः
प्राग्वदग्निं समभ्यर्च्य स्विष्ट्वा पूर्णाहुतिं चरेत्  १८
प्रतिसंबन्धयेद्रात्रौ लिंगपीठं द्विजोत्तमः
स्वर्णरजतकार्पाससूत्रैर्वा हृदयेन तु  १९
प्रभाते सुमुहूर्ते तु लक्षणोद्धारमाचरेत्
पायसं घृतसंयुक्तं शिरस्स्थाने बलिं हरेत्  २०
रक्तशालिं परित्यजय गन्धाद्यैरर्चयेत् हृदा
रक्तेन धातुना लिंगमध्ये सूत्रं तु पातयेत्  २१
मुखभागेस्य मध्ये तु नाळं कुर्यात्सलक्षणम्
लिंगमानेन मतिमान्सूत्रविस्तारकं नयेत्  २२
रुद्रभागोदयं गृह्य शिरसो वर्तनान्वितम्

सवेदविंशतं भागं कृत्वैकांशे तु विस्तृतम् २३
अंगुलं वसुधाभज्य एकांशं यवमुच्यते
उत्तमोत्तमलिंगस्य सूत्रं पञ्चयवं ततम् २४
सर्वेषामपि लिंगानां यवार्धं प्रति ह्रासयेत्
अधमाधमलिंगस्य सूत्रतारं यवं भवेत् २५
सूत्रविस्तारमेवं स्यात्खातं चैव तु तत्समम्
एकांशमूर्ध्वतो वर्ज्यं स्तनादूर्ध्वं तदंशके २६
अधस्तादंशयोर्विप्र लक्षणोद्धारमाचरेत्
लक्षणं शिरसि व्याधिः ललाटे मरणं भवेत् २७
नेत्रसूत्रे त्वपस्मारमास्ये धान्यविनाशनं
चिबुके बन्धुनाशः स्यात्कंठे स्कन्धविनाशनम् २८
स्तनदेशे सुतं हन्ति तस्मादेतानि वर्जयेत्
शिरसा सहरुद्रांशं गुणांशं विभजेत्समम् २९
पद्मस्य मुकुळाकारं लिंगाकारं यथाकृति
द्विजानामतिवृद्ध्यर्थं नृपाणां च जयावहम् ३०
खड्गौ प्रत्यक् द्विकाकारौ कुञ्जराक्षमिवाकृतिः
शंखाभछत्रयोर्भेदात् नृपाणामभिवृद्धये ३१
कराञ्जलिसमाकारं गोकर्णाकृतिवत् भवेत्
वैश्यानां तत्त्रिकोणं च शूलवृत्तायतं तथा ३२
शूद्रवृद्धिकरं त्रीणि सूत्रं गृह्य तु लक्षणम्
लक्षणोद्धारणोक्तांशं रुद्रभागविभाजितम् ३३
मुकुळोदयमेकांशं तद्व्यासं चापि तत्समम्
तन्मूलान्नाळदीर्घं तु नवभागमुदाहृतम् ३४
तन्नाळमेक सूत्रं वा सूत्रद्वित्रियुतं तु वा
सूत्रद्वययुतं चेत्तु सूत्रान्तरं यवत्रयम् ३५

यवद्वयान्तरं वाथ नाळतारं द्विजोत्तम
नाळमूर्ध्वे च तस्याग्रे सीमासूत्रं समालिखेत् ३६
तन्नाळंचैकसूत्रं चेत् लिंगमध्ये विशेषतः
सूत्रोक्तव्यासखातं च नाळायामे तु कल्पयेत् ३७
नाळाधस्तात्तु व्योमांशं दृश्यं विष्णवंशकोपरि
मणिरेखा ततः कार्या मुकुळं स्पुल्लिंगमन्तगौ ३८
मणिरेखयोन्तर्विप्र पद्ममूलं समं तु वा
पद्मतारं त्रिधैकं वा वेदांशे त्र्यंश एव वा ३९
पञ्चांशे तु युगांशं वा पद्मतारार्धमेव वा
मुकुळमूलांतरं ह्येवं नाळमूलान्तरं शृणु ४०
नाळायामसमं वार्धपादं पादयुगांशकम्
त्रिभागं पञ्चभागं तु वेदभागमथापि वा ४१
नाळमूलसमं त्वेवं मणिरेखा द्वयोत्तरम्
मूलादाग्रं क्रमात्क्षीणं मणिरेखान्तरं कुरु ४२
नाळमूले समे तिर्यग्गते पृष्ठे तु बन्धयेत्
मणिरेखा व्यासखातं लिंगस्योच्छ्रितं सूत्रयेत् ४३
तत्पादमूलपर्यन्तं वसुभागविभाजिते
मणिरेखालंबनं तु नवधा परिकीर्तितम् ४४
सर्वेषु लक्षणोद्धारेष्वष्टमं मणिरेखके
प्रथमं लक्षणं प्रोक्तं द्वितीयं लक्षणं शृणु ४५
लक्षणोद्धरणोर्ध्वांशं दशभागविभाजिते
मुकुळोदयमेकांशं नवांशं नाळदीर्घकम् ४६
नाळाधस्तात्तु व्योमांशं नीत्वा शेषं तु पूर्ववत्
द्वितीयं लक्षणं ख्यातं तृतीयं लक्षणं शृणु ४७
लक्षणोद्धारभागं तु धर्मभागविभाजिते

एकांशं मुकुळोच्चं तु नवांशं नाळदीर्घकम् ४८
शेषं पूर्ववदुद्दिष्टं चतुर्थं लक्षणं शृणु
लक्षणांशं तु नवधाऽऽभज्यैकांशं तु कुड्मलम् ४९
सप्तांशं नाळदीर्घं तु शेषं पूर्ववदेव हि
चतुर्थं लक्षणं प्रोक्तं पञ्चमं लक्षणं शृणु ५०
लक्षांशं वसुधाभज्य व्योमांशं मुकुळोदयम्
षडंशं नाळदीर्घं तु नाळाधस्तात् शिवांशकम् ५१
तदेव सप्तभागं तु नाळदीर्घमुदाहृतम्
शेषं प्रागिव कर्तव्यं सप्तमं लक्षणं शृणु ५२
लक्षणांशे तु सप्तांशे शश्यंशं मुकुळोदयम्
व्योमांशं नाळदीर्घं तु शेषं पूर्ववदेव हि ५३
षडंशं वाथ तन्नाळदीर्घं शेषं तु पूर्ववत्
एवमष्टविधं ख्यातमायामं तु द्विजोत्तम ५४
अग्राकारेऽब्जमुकुळं भानुसंख्या तु सुव्रत
यथेष्टनाळं कर्तव्यं नवसंख्या तु देशिक ५५
दृढसूत्रं प्रकर्तव्यं लिंगेषूक्तप्रमाणतः
स्थापयेत्तु ततो लिंगं प्रागग्रं दारुविष्टरे ५६
लक्षयेत्पिंडिकावक्त्रं लिंगं सौम्ये निधापयेत्
स्थापनैः कलशैस्सार्धं लिंगपीठो ह्युदाहृतः ५७
गव्यैः गन्धोदकैः स्नाप्य गन्धपुष्पादिभिर्यजेत्
लंबकूर्चसमायुक्तं सर्वालंकारसंयुतम् ५८
रथे तु शिबिकायां वा ग्रामं कृत्वा प्रदक्षिणम्
ततो जलाशयं प्राप्य जलाधिवासनं कुरु
लक्षणोद्धारमाख्यातं प्रतिमालक्षणं शृणु ५९

इति काश्यपीये शिल्पशास्त्रे लिंगलक्षणोद्धारलक्षणं नाम

द्विपञ्चाशत्तमः पटलः

## अथ त्रिपंचाशत्तमः पटलः
### प्रतिमालक्षणम्

प्रतिमालक्षणं वक्ष्ये शृणुष्वैकाग्रमानसः
अचलं च चलं चैव चलाचलमिति त्रयम् १
मृण्मयं शार्करं चैव सौधजं चाचलं स्मृतम्
शैलजं दारुजं चैव धातुजं रत्नजं तथा २
चलाचलमिति ख्यातं चलमेवं तु लोहजम्
अर्धचित्रं च चित्रं च चित्राभासमिति त्रिधा ३
अर्धांगदर्शितं बिंबमर्धचित्रमिति स्मृतम्
सर्वावयवदृष्टं यत्तच्चित्रमभिधीयते ४
निम्नोन्नते पटे भित्तौ बिंबं त्वाभासमुच्यते
अर्धचित्रं तु सुधया अन्यच्चित्रमथार्धकम् ५
आभासं धातुभिः कुर्यात् चित्रकर्मविधानतः
चित्राभासं तु देवानां छलं श्रेष्ठान्तराधमम् ६
इष्टकाभिः वरं पीठं पीठादाभासकं वरम्
आभासादर्धचित्रं तु तस्माद्वै मृण्मयं वरम् ७
मृण्मयात् दारुजं श्रेष्ठं दारुजात् शैलजं वरम्
शैलजात् लोहजं श्रेष्ठं कर्तॄणां च फलं तथा ८
लोहजेषूत्तमं स्वर्णं मध्यमं रजतं भवेत्
ताम्रजं कन्यसं ख्यातं तेषु तेषु फलं तथा ९
बिंबमानं च द्रव्यं च श्रेष्ठमध्याधमं भवेत्
सर्वद्रव्येषु देवत्वं सममेव तु विद्यते १०
समं चेदेषु देवत्वं फलं श्रेष्ठादिकं कथम्

ऊषरे स्निग्धभूमौ च मार्दवे च महीतले  ११
पृथग्वै जातिवृक्षाणां स्थापने तु विशेषतः
फलं स्थलानुरूपेण यथालाभं तथा भवेत्  १२
स्थलभेदेन वृक्षं तु भेदमात्रं न विद्यते
तथा दिव्ये फले तुल्यं द्रव्यभेदं फलप्रदम्  १३
तस्मादेषु यथालाभं द्रव्येण सकलं कुरु
योनरः कृतवान्भूमौ पुत्रमित्रकळत्रयुक्  १४
यथेष्टविभवोपेतः इष्टादिविषयं सुखम्
भुङ्क्ते च क्रमतो विप्र सालाक्यादिफलाश्रितम्  १५
मनसा कर्मणा वाचा यो नरः स्तंभकारकः
सोपि कर्मानुसारेण सक्तकृत्स्नफलानुभाक्  १६
तस्मादाढ्येन कर्तव्यं सकलं तु शिवात्मकम्
सुखासनस्थितं बिंबमुमास्कन्दसमं द्विज  १७
तृतीयं चंद्रमूर्तिः स्यात् चतुर्थं वृषवाहनम्
पञ्चमं नृत्तमूर्तिस्तु गंगाधरमनन्तरम्  १८
सप्तमं त्रिपुरारिश्चाष्टमं कल्याणसुन्दरम्
नवमं चार्धनारीशं दशमं गजहारिणम्  १९
ततः पाशुपतं विद्यात्कंकाळं द्वादशं स्मृतम्
त्रयोदशं हरार्धं स्यात् भिक्षाटनं चतुर्दशम्  २०
चंडेश्वरप्रसादं तु पञ्चदशमुदाहृतम्
षोडशं दक्षिणामूर्तं ततः कालारिसंज्ञिकम्  २१
लिंगोद्भवं च मूर्तानां भेदास्त्वष्टादश स्मृताः
सर्वेषां प्रतिमानां तु मानमादौ वदाम्यहम्  २२
सर्वेषामपि लिंगानां शिरोमानं विनोदयम्
गृहीतो विद्यमाने तु नान्येषु शिरसा सह  २३

स्थूलदेशे परीणाहं विस्तारं चैव तत्र वै
पूजांशं द्विगुणं ग्राह्यं द्वात्रिंशद्विभजेत्समम् २४
तेषु वै सप्तविंशांशं पञ्चविंशांशमेव वा
त्रिभागाधिकविंशांशमेकविंशतिरेव वा २५
एकोनविंशदंशं वा षोडशं वा त्रयोदशम्
रुद्रांशं नन्दभागं वा सप्तांशं पञ्च एव वा २६
अथवा रुद्रभागान्त्यं नवभागविभाजिते
तेष्वेकांशं समारभ्य एकैकांशविवर्धनात् २७
यावच्च सप्तविंशांशं तावद्वै सप्तविंशतिः
पूजांशके तु बिंबोच्चं साष्टत्रिंशति भेदकम् २८
तथैव लिंगतारे च लिंगनाभे च कल्पयेत्
लिंगात् बिंबोच्चभेदं तु तत्वाधिकशतं भवेत् २९
गर्भगेहं तथा नन्दभागं नन्दविधं भवेत्
अथवा गर्भगेहं तु त्रिनवांशविभाजिते ३०
सप्तविंशतिमानं स्यात् एतदेकांशवर्धनात्
पञ्चांशमुत्तमोत्सेधं मध्यमं चतुरंशकम् ३१
अधमं तु गुणांशं स्यात्त्रिविधं द्वारमानकम्
अधमोत्तमयोर्मध्ये वसुभागविभाजिते ३२
नवधा सकलोत्तुंगं द्वारमानं विधीयते
अथवा द्वारतुंगं तु सप्तविंशतिभाजिते ३३
एकैकांश विहीनेन बिंबोच्चं सप्तविंशतिः
एवं हि द्वारमाने तु षट् त्रिंशं कौतुकोदयम् ३४
तथाऽधिष्ठानमाने च स्तंभमाने च कल्पयेत्
सद्मवद्वाह्य विस्तारे अथवैवं प्रकल्पयेत् ३५
एकादिनवहस्तान्तं नवधा हस्तमानकम्

तालादिनवतालान्तं तथा नवविधं भवेत् ३६
कर्तुश्चोदयतुल्यं वा यजमानवशादिदम्
अथवा कर्तृतुंगं तु नवभागविभाजिते ३७
एकैकांश विहीनेन यावत्तु सकलोदयम्
चतुर्विंशच्चतुर्भागं पूजांशोच्चं तु भाजिते ३८
एकांशमंगुलं ख्यातं मूललिंगांगुलं विदुः
मानांगुलं तु वा प्रोक्तं पुरप्रासादमानके ३९
कर्तुर्दक्षिणहस्ते तु मध्यमांगुलिमध्यमे
पर्वदीर्घं तु तारं वा मानांगुलं द्विधास्मृतम् ४०
सप्तांगुलं समारभ्य द्विद्व्यंगुलविवर्धनात्
त्रयोविंशाधिकं यावत् शतान्तं त्रिभिरंगुलैः ४१
बिंबमानं तु कर्तव्यमादौ द्वाभ्यां परार्थकम्
गृहे वाऽऽत्मार्थबिंबानां मानं मात्रांगुलेन तु ४२
कर्तव्यमन्यथा चेत्तु कर्तव्ये कर्तृनाशनम्
अंगुले निर्मितं बिंबं सर्वजात्यर्हकं परम् ४३
अंगुलांगुलवृद्ध्या हि आयादि षट् शुभेक्षणम्
त्रिष्वंगुलप्रमाणेषु जात्यायांशं न रोपयेत् ४४
अंगुलादन्यद्यन्मानं तद्भेदाशीतिधा भवेत्
एकांशं रोपयेत्तस्मात् जात्यंशं तत् द्विजार्हकम् ४५
द्विभागाधिकषष्ट्यंशं भागैकांशसमन्वितम्
नृपजात्यंशकं ज्ञेयं नृपाणां वृद्धिकारणम् ४६
चतुर्विंशतिभागं तु कृत्वा भागसमन्वितम्
वैश्यजात्यर्हकं ख्यातं वैश्यानामभिवृद्धिदम् ४७
षोडशांशं समारोप्य शूद्रवृद्धिकरांशकम्
एवं जात्यंशसंयुक्तमंशमष्टगुणी कृतम् ४८

सप्तविंशतिसंख्याभिर्हृतं शेषं दिनं भवेत्
तद्दिनं जाति ऋृक्षं स्यात्तद्दिनं सुखसंपदे ४९
सुशोभनं तु युक्तं चेत्कर्तृवास्तु नृपादिनाम्
त्रिंशत् शतान्तभागान्तं बिंबोच्चं तु विभाजिते ५०
शबरं योजयेद्यावत् शुभायादीनि संभवम्
तन्मानं कौतुकोच्चं तु पादादुष्णीषसीमकम् ५१
कर्तुर्वांशमिदं ख्यातमंशैरायादि कल्पयेत्
अष्टाभिर्वर्धयेदंशं भानुभिस्तु हृते द्विज ५२
शेषमायमिति ख्यातमंशमष्टगुणी कृते
सप्तविंशत् हृतं शेषमश्विन्यादि तु संभवेत् ५३
नवभिर्गुणिते त्वंशे राशिभिस्तु हृते ततः
शेषं व्ययमिति ख्यातं तदंशमनलेन तु ५४
अर्धितं वसुभिर्निघ्नं शेषं ध्वजादियोजना
नवभिर्गुणिते सप्त हृते रव्यादिवासरम् ५५
संभवं वर्धयेद्वेदसंख्या तु ह्रसयेच्चेदसंज्ञया
शेषमंशकमित्युक्तमेवमायादि षट् भवेत् ५६
आयाधिकं व्ययक्षीणं लाभदं चैव शोभनम्
ध्वजो धूमश्च सिंहश्च श्वाखरो वृषभो गजः ५७
काकश्च योनयश्चाष्टौ हरिध्वजवृषागजः
योनयश्शुभदा ज्ञेयाः इतरा विपरीतकाः ५८
विपदं प्रत्यरं चैव वधं वैनाशिकं तथा
षष्ठाष्टमं त्यज्य शेषरि नक्षत्रं शुभदायकम् ५९
वारं सौम्यादि शुभदं भौमवारं तु वर्जयेत्
सूर्यं वारं च सौरस्य मध्यं शेषं शुभावहम् ६०
भानुवारादि संयुक्तं विशाखादिचतुश्चतुः

वियोगं मरणं नाशममृतं च यथाक्रमम् ६१
तस्करो भुक्तिश्शक्तिश्च धन्यं राजा च षराडकः
अभयं धनमृणं चैव नवांशकमुदाहृतम् ६२
तेषु षंडं तस्करं च ऋणं चैव तु वर्जयेत्
गणे व्यस्मुरमानुषं योगमात्रं विवर्धयेत् ६३
एवं परीक्ष्य शोभाढ्यं माधुर्यं तु सुशोभयेत्
चतुर्णामभिवृद्ध्यर्थं जात्यंशकं प्रयोजयेत्
तस्मादुगायभागौ च प्रशस्तप्रवेशकाश्यपम् ६४
इति काश्यपीये शिल्पशास्त्रे प्रतिमालक्षणकथनं नाम त्रिपञ्चाशत्तमः पटलः

## अथ चतुःपंचाशत्तमः पटलः

## तालभेदकथनम्

उत्तमं दशतालादिलक्षणं वक्ष्यतेऽधुना
मृण्मयं चेत्तुबिंबं वै शूलस्थापनमाचरेत् १
शैलजं प्रतिमं चेति शिलाग्रहणलिंगवत्
लोहजं सकलं यत्तु मधूच्छिष्टेन निर्मितम् २
स्थंडिलं शालिभिः कुर्यादालयाग्रे तु मंडपे
कुशेशयं तु संकल्प्य दर्भैः पुष्पैः परिस्तरेत् ३
तदूर्ध्वे फलकायादि दारुजं प्रागुदाहृतम्
आचार्यः शिल्पीकर्ता च शुभमानं परिग्रहेत् ४
तन्मास्योत्थितांगानि सिकते नैव कारयेत्
प्राक् शिरश्चोर्ध्ववक्त्रं च फलकायां निधापयेत् ५
तस्य दक्षिणपार्श्वे तु शिवाग्निं तु प्रकल्पयेत्
समिदाज्य चरुद्रव्यं हुत्वा चाष्टशताहुतीः ६

द्रव्यान्ते व्याहृतीर्हुत्वा पूर्णाहुतिं समाचरेत्
ध्यात्वा बिंबाकृतिं त्वग्निमध्ये मूलमुदाहरेत् ७
आत्मनि यथा धूपं आघ्राणं तु समर्पयेत्
अग्रात्क्रमात्सन्धानमाचरेत्तु यथाविधि ८
शिरस्सन्धानमीशेन मुकुटं कवचेन तु
अस्त्रेण हस्तसन्धानं पादौ सद्येन संधयेत् ९
आदौ पश्चात्तु सर्वांगान्क्रमात्संपूर्णमाचरेत्
उपांगांस्तु ततः कल्प्य प्रत्यंगांस्तु ततः कुरु १०
अष्टत्रिंशत्कलान्यासं तत्तदंगानि विन्यसेत्
वस्त्रमाभरणं यज्ञसूत्रं चोपांगमिष्यते ११
अस्त्रं प्रतिकृतेश्चिह्नं प्रत्यंगमिति विद्यते
धर्मतालात्त्रितालान्तं श्रेष्ठान्तराधमं त्रयम् १२
उत्तमं दशतालाख्यं चतुर्विंशच्छतांगुलम्
मध्यमं दशतालं तु भानुपंक्त्यंगुलं भवेत् १३
कलाधिकशतांगुल्यमधमं दशतालकम्
सद्वादशशतं भागं नवतालोत्तमं भवेत् १४
अष्टोत्तरशतांशं तु मध्यमं नवतालकम्
कन्यसंनवतालं तु वेदाधिकशतं भवेत् १५
तालं प्रत्येवमेवं तु क्रमाद्वेदांगुलं हरं
उत्तमदशतालेन ब्रह्मविष्णुमहेश्वराः १६
मध्यमदशतालेन उमा सरस्वती तथा
उषा भूमिश्च दुर्गा च लक्ष्मीश्च मातरस्तथा १७
ज्येष्ठा चैव प्रकर्तव्या स्वस्वांगानि समन्विताः
चंद्रादित्यावश्विनौ च ऋषयस्तु ग्रहास्तथा १८
अर्थं च षरामुखं चैव चंडेशं क्षेत्रपालकम्

कन्यसदशतालेन कारयेत् द्विजसत्तमः १९
वसुवर्गाष्टमूर्तींश्च विद्येशान्लोकपालकान्
अन्याश्च देवताश्चैव नवतालोत्तमेन तु २०
यक्षाप्सरोगणांश्चैव अस्त्रमूर्तिमरुद्गणान्
मध्यमनवतालेन विद्याधरगणांस्तथा २१
असुरान्सिद्धगन्धर्वान्पितरश्च तथैव च
कन्यसनवतालेन कारयेत्तु विचक्षणः २२
अष्टतालेन साध्यांस्तु पिशाचान्सप्तमेन तु
रसतालेन कुब्जांस्तु कारयेद्देशिकोत्तमः २३
पञ्चतालोक्तमानेन विघ्नेशं कारयेद्बुधः
तन्मध्यमाधमेनैव सर्वभूतगणान्कुरु २४
बालस्तु वेदतालेन त्रितालेनैव कारयेत्
द्वितालं किन्नरश्चैव एकतालं तु कूर्मकम्
एवं ताळक्रमं प्रोक्तं बेराणामनुकूलकम् २५

इति काश्यपीये शिल्पशास्त्रे तालभेदकथनं नाम चतुःपञ्चाशत्तमः पटलः

## अथ पञ्चपञ्चाशत्तमः पटलः

### उत्तमदशताललक्षणम्

उत्तमं दशतालं तु शृणु वक्ष्ये द्विजोत्तम
सवेदविंशदंशं च शतं बिंबोदयं कुरु १
तेष्वेव तालमात्रं स्यात्तन्मात्रं वसुभाजिते
उष्णीषात्पादपर्यन्तमंगमानं प्रमीयते २
त्रियवाधिकचन्द्रांशमुष्णीषोच्चमुदाहृतम्
तस्मादापूर्वकेशान्तमंगं भागमुदाहृतम् ३

केशान्तादक्षिसूत्रान्तं युगांशं त्रियवाधिकम्
अक्षिसूत्रात्पुटान्तं च पुटात् हन्वन्तमानकम् ४
प्रत्येकं त्रियवाधिक्यं युगांशोदयमिष्यते
हन्वादिगळमानं तु चतुर्यवमुदाहृतम् ५
यवैकोनमुदांशं तु कण्ठोच्चमिति कथ्यते
कण्ठमूलाद्धनुस्सूत्रं हिक्कासूत्रमुदाहृतम् ६
हिक्कायाहृदयान्तं च हृदयं नाभिसीमकम्
नाभेस्तु मेढ्रमूलं तु समं गुणयवाधिकम् ७
अग्रमूलात्सूत्रमध्यं अर्धसूत्रं तदुच्यते
अर्धसूत्रादयश्चोरुदीर्घं नक्षत्रमायतं ८
तस्माद्वेदांगुलं जानुजंघोरुसदृशायतम्
युगं वादतलोत्सेधमेवमुत्सेधमुच्यते ९
अंगुष्ठाग्रात्तु पार्ष्ण्यन्तं तलं सप्तदशांगुलम्
हिक्कासूत्रादयो बाहुदीर्घमृक्षांगुलं भवेत् १०
कूर्परोच्चं द्विभागं स्यादेकविंशत्प्रकोष्ठकं
सार्धत्रयोदशांगुल्यं मध्यमांगुलिसीमकम् ११
अग्रतो मुखविस्तारं सार्धभारांगुलं भवेत्
मुखात्कर्णान्तविस्तृतं त्रयोदशांगुलं मतम् १२
ग्रीवाग्रं सार्धनन्दांशं ग्रीवामूलं दशांगुलम्
हृदयाद्बाहुसीमान्तं चत्वारिंशच्च सार्धकम् १३
सार्धद्वाविंशदंगुल्यं कक्षयोरन्तरस्तनं
नवांशं चतुर्यवोपेतं बाहुमूलविशालकम् १४
एकविंशतिबाहुः स्यात्स्तनदेशस्य विस्तरम्
हृदयावधिविस्तारमेकोनविंशदंगुलम् १५
कलांशं चतुर्यवोपेतं मध्यव्यासमुदाहृतम्

एकोनविंशदंशं तु श्रोणितारमुदाहृतम्  १६
कटेरग्रविशालं तु द्विनवांगुलमुच्यते
तदधः कटिपार्श्वान्तं विस्तारस्सार्धविंशतिः  १७
पादोनमनुभागं तु ऊरुमूलविशालकम्
सपादद्वादशांशं तु ऊरुमध्यविशालकम्  १८
पादोनधर्मभागं तु जानुव्यासमुदाहृतम्
सपादवसुभागं तु जंघामूलविशालकम्  १९
पादोनपञ्चभागं तु नळकाविस्तृतं भवेत्
त्रियवाधिकपञ्चांशं गुल्फाद्वव्यासमुच्यते  २०
अद्वादातलतुंगं तु तस्य विस्तारमुच्यते
पार्ष्णितारं च तत्तुल्यं पाष्ण्योरुच्चं तथैव हि  २१
तलमध्यं षडंशं स्यात् यवद्वयसमायुतम्
तलाग्रविस्तृतं सप्तभागमित्यभिधीयते  २२
द्वियवोपेतवेदांशं पादांगुष्ठायतं भवेत्
त्रियवोपेतवेदांशं तर्जन्यायाममुच्यते  २३
पादोनवेदभागं तु मध्यांगुल्यायतं भवेत्
यवोपेताग्निभागं त्वनामिकायाममिष्यते  २४
सार्धपद्वांशमानं तु कनिष्ठांगुलिदीर्घकम्
प्रदेशिन्यादितन्नवसप्तर्धाश्च ---  २५
नवतारं स्वताराधं नखं पूर्वोक्तवद्विदुः
तत्तदंगुलिविस्तारं वेदांशं विभजेद्बुधः  २६
त्रिभागमंगुलाग्रोच्चं शेषं स्यात्तु नखान्तरम्
त्रियवाधिकवस्वंशं बाहुमध्यविशालकम्  २७
सपादसप्तभागं तु कूर्परव्यासमुच्यते
पादोनरसभागं तु प्रकोष्ठमध्यविस्तरं  २८

पादोनचतुरंशं तु मणिबन्धविशालकम्
सप्तांशं तु तलायामं सार्धषरामध्यमांगुलं २९
सपादभूतभागं त्वनामिकायाममुच्यते
यवाधिकं तु पञ्चांशं तर्जन्यायाममुच्यते ३०
सपादवेदभागं तु कनिष्ठांगुष्ठदैर्घ्यकम्
अंगुष्ठमूलविस्तारं सपादांशमुदाहृतम् ३१
तर्जन्यष्टयवाख्याता नवसंख्या तु मध्यमा
अनामिका चाष्टयवा सप्तसंख्या कनीयसी ३२
अंगुष्ठाद्यंगुलीनां तु मूलविस्तारमेव हि
तत्तन्मूलकलांशेंशसीनमग्रविशालकम् ३३
अग्रताररसांशे तु पञ्चांशं नखविस्तृतम्
पार्श्वयोर्मांसळं शेषं वृत्तायतं नखाकृति ३४
सपादं नखतारं तु नखायाममुदाहृतम्
नखायामद्वयं चाधः पर्वदीर्घं प्रशस्यते ३५
मूलाग्रपर्वयोर्मध्यपर्वदीर्घं तु पूर्ववत्
अंगुष्ठं तु द्विपर्वं स्यात् शेषास्त्रिपर्वसंयुताः ३६
अंगुष्ठमूलपर्वस्य दीर्घं सप्तदशयवाः
तर्जनीमूलपर्वं तु अनामिका द्वयांगुलम् ३७
मध्यमामूलपर्वस्य दैर्घ्यमष्टादशयवाः
कनिष्ठामूलपर्वं तु त्रयोदशयवाः स्मृताः ३८
मूलाग्रपर्वयोर्मध्ये दीर्घमध्यस्थपर्वसु
सार्धभूतांगुलं विप्र तलाग्रविपुलं भवेत् ३९
रसांशं मध्यविस्तारं हस्तस्यैव तलस्य तु
तलमूलविशालं तु सार्धषड्भागमुच्यते ४०
अंगुष्ठमूलमारभ्य तर्जनीमूलमात्रकम्

सार्धं तु द्व्यंगुलं प्रोक्तं शुकोदरमथोच्यते ४१
अंगुष्ठमूलमारभ्य मणिबन्धावसानकम्
दीर्घं वेदांगुलं प्रोक्तं द्व्यर्धांशं तु घनं भवेत् ४२
पार्ष्णिहस्तघनाग्न्यंशमग्रमंगुष्ठवन्नयम्
अंगुलीनामधस्तात्तु द्व्यर्धांशं मांसलं ततः ४३
द्विभागं पार्ष्णिहस्तस्थशुकोदरविशालकम्
शेषं मध्यतलं निम्नं भूतवेदग्निवायवम् ४४
सूक्ष्मरेखां लिखेत्तस्मिन् शंखं वा चक्रशूलवत्
पद्माभं वा कुशाभं वा तलरेखां प्रकल्पयेत् ४५
यवाष्टांशनतं निम्नं रेखाणां तु द्विजोत्तम
वृत्ताभेऽपेक्षितं गेषु व्यासं पञ्चविभाजिते ४६
एकांशं तु परिग्राह्यं विस्तारं त्रिगुणान्वितम्
यत्तन्नाहमिति ख्यातं नाहतो तारकल्पितम् ४७
कर्णोर्ध्वे शिरसोनाहं साष्टत्रिंशांगुलं भवेत्
कर्णोर्ध्वे तु शिरस्तारं यवोनद्वादशांगुलम् ४८
कर्णयोः पूर्वनाळं तु द्वाविंशदंगुलं भवेत्
कर्णयोः पूर्वनाहं तु भान्वंगुलमुदाहृतम् ४९
तयोर्मध्यस्थभागं तु कर्णस्थितिरुदाहृतम्
शिरसो मध्यमामूर्धमण्डलं चतुरंगुलम् ५०
तस्मात्तदग्रकेशान्तं नवांगुलमुदाहृतम्
ततो वै मण्डलात्कर्णकेशान्तं च नवांगुलम् ५१
मण्डलात्पृष्ठकेशान्तं सार्धमध्यांगुलं भवेत्
ललाटे तु तिरश्चीनं नवांगुलमुदाहृतम् ५२
केशान्तादक्षिसूत्रस्य द्वयोर्मध्ये भ्रुवोस्स्थितिः
भ्रुवाश्रौ तु नवांगुल्यं चापाकारं यथा कुरु ५३

द्व्यन्तरं तु भ्रुवोर्विप्र सार्धवेदयवं भवेत्
पञ्चांगुलं भ्रुवायामं मध्यतारं यवद्वयम् ५४
बालचन्द्रार्धवत्क्षीणं भ्रुवाग्रौ तस्य मध्यमात्
कनीनिकायाविस्तारं यवमानमुदाहृतम् ५५
कृष्णमण्डलविस्तारं चोत्सेधं षड्यवं भवेत्
सितांशं तत्समव्यासं कृष्णमण्डलपार्श्वयोः ५६
शफराकृतिकं वापि धनुराकृतिरेव वा
अर्धचंद्राकृतिर्वाथ नेत्राकारं प्रकल्पयेत् ५७
तदाकारानुकूलेन सितमण्डलयोर्द्विज
नेत्रान्तेर्धयवं रक्तमण्डलं तु सितांशके ५८
कृष्णमण्डलमध्ये तु ज्योतिर्मण्डलकं यवम्
तदष्टांशैकभागं तु तन्मध्ये दृष्टिमण्डलम् ५९
सार्धांशयवमानं तु ऊर्ध्ववर्मततं भवेत्
अधोवर्म च तत्तुल्यं दीर्घमष्टादशं यवम् ६०
ऊर्ध्ववर्मभ्रुवोरन्तः सार्धषट्कयवं भवेत्
अधोवर्मस्थितौ विप्र नेत्रसूत्रं विधीयते ६१
कर्तृनाशमधोदृष्टिरूर्ध्वदृष्टिर्विपत्करम्
बहुनाशं भवेत्पार्श्वदृष्टिश्चेत् ग्रामवासिनाम् ६२
तस्मात्सर्वप्रयत्नेन सममेव निरीक्षणम्
नेत्रमेवं समाख्यातं नासिकालक्षणं ततः ६३
नासिकापुटबाह्यं तु तारमष्टादशं यवम्
तदर्धं मध्यविस्तारं तस्यार्धं मूलविस्तृतम् ६४
द्वारस्यान्तर्गतं व्यासं सार्धसप्तयवं भवेत्
पुटतारं पञ्चयवं पुटं निष्पावबीजवत् ६५
तिलपुष्पवदाकारं नासिकाकारमेव हि

एकांशं नासिकोत्सेधं तद्घनं तु यवं भवेत्  ६६
पुटयोर्मध्यभित्तिस्तु पुष्करं चेति कथ्यते
सार्धवेदयवं गोजिदीर्घं तस्यार्धविस्तृतम्  ६७
ऊर्ध्वोष्ठस्योर्ध्वनिम्नं तु गोजिनाम्ना प्रकीर्तितम्
यवमाननतं गोजी तदूर्ध्वं नासिकास्थितिः  ६८
सपादं चतुरंशं त्वास्य दीर्घं तिर्यग्विदुः
उत्तरोष्ठायतं चास्य दीर्घतुल्यमुदाहृतम्  ६९
उत्तरोष्ठस्य मध्ये तु तारं सार्धत्रयं यवम्
आनुपूर्व्या कृशं तारमास्य सीमावसानकम्  ७०
यवमानघनं पाली उत्तरोष्ठस्य चोपरि
त्रिवक्रोपनतापाली तदोष्ठसदृशायता  ७१
अष्टादशयवं प्रोक्तमधरोष्ठस्य दीर्घकम्
यवाधिकांगुलं तस्य विस्तारं द्विजसत्तम  ७२
अधरपालिकासार्धयवतारमधोगतम्
चिबुकादयरोच्चं तु सार्धषडयवमुच्यते  ७३
किञ्चित्प्रहसिताकारमास्यं युक्त्या तु कारयेत्
अधरात् चिबुकालंबं सार्धपञ्चांगुलं भवेत्
चिबुकात्तुंगशर्वेशं सार्धाष्टयवमुच्यते  ७४
सार्धद्व्यंगुलं तस्य तारमायतवर्तुलम्
हनोस्सन्धौ कर्णबन्धान्तरं तु द्वादशांगुलम्  ७५
हनोर्बाह्यं समारभ्य पादोनगुणमात्रकम्
कण्ठवेशमिति ख्यातं ततः कर्णं वदामि ते  ७६
नेत्रात्तत्कर्णबन्धान्तं द्व्यन्तरं सप्तमात्रकम्
कर्णस्य तु विशालं तु अष्टादशयवाः स्मृताः  ७७
अक्षिसूत्रोर्ध्वतः कर्णतुंगं चाष्टयवं स्मृतम्

तदूर्ध्वं चोर्ध्वबन्धं तु शेषं वृत्तं तु मूर्धतः ७८
नेत्रसूत्रादधः कर्णस्त्रोतः कर्णस्य मध्यतः
नेत्रसूत्रादधः कर्णबन्धं सप्तदशं यवम् ७९
सार्धवेदांगुलं तस्मात्तस्य नाळं प्रलंबयेत्
पूर्वनाळायतं व्योमभागं सार्धांगुलं परम् ८०
नाळयोर्व्यासमाख्यातं गळमर्धांगुलं नतम्
नाळान्तरं त्रिपादं च वेदांशं विस्तृतायतम् ८१
कर्णतुंगमशेषं तु यवैकोननवांगुलम्
पिप्पलीघनमर्धांशं द्विगुणं हि तदायतम् ८२
उत्सेधं चार्धमात्रं स्यात् मूलादाग्रक्षयानुगम्
द्विभागं पिञ्चूषीदीर्घं द्वियवार्धांशततिः ८३
अक्षिसूत्रादधः कर्णद्वारमर्धांगुलं भवेत्
कर्णद्वारोत्तरं निम्नं सममेव हि लक्षितं ८४
कर्णपाळी घनं सार्धयवं नीप्रं चतुर्यवम्
पृष्ठकर्णस्य विस्तारमध्यर्धांशमुदाहृतम् ८५
केशान्तात् पृष्ठकर्णान्तमन्तरं सार्धमात्रकम्
पृष्ठकेशावसाने तु नाड्यर्धांशं तु तत्ततं ८६
तस्याधः पृष्ठग्रीवोच्चं युगांशं त्रियवाधिकम्
कृकाटिकायाः पृष्ठाग्रं ग्रीवाग्रं तु नवांगुलम् ८७
पृष्ठग्रीवस्य मूलस्य तारं सार्धदशांगुलम्
मूलादाग्रं क्रमात्क्षीणं ग्रीवं वृत्ताभमुच्यते ८८
हिक्कासूत्रोपरिस्कन्धतुंगं तु चतुरंगुलम्
स्कन्धसन्धेरधस्सार्धषरामात्रं स्कन्धसीमकम् ८९
सप्तांगुलघनं स्निग्धं हिक्कावधिक्रमात् द्वयम्
पृष्ठग्रीवादधस्तात्तु ककुन्मानं दशांगुलम् ९०

तस्मादाकटिसीमान्तं वंशमृक्षांशमायतम्
तद्वंशनतविस्तारं सार्धषोडशकं यवम् ९१
वंशमानादधस्तात्तु वंशमूलं गुणांगुलम्
परे तु तुंगमेवं स्यात्तस्मिन् व्यासं वदामि ते ९२
सार्धमष्टांगुलं प्रोक्तं कक्षयोरन्तरं द्विज
कक्षयोरंसफलकतुंगं सप्तांगुलं भवेत् ९३
कक्षोर्ध्वबाहुसीमान्तं सप्तांगुलमुदाहृतम्
सार्धषोडशमात्रं तु मध्यव्यासमुदाहृतम् ९४
कक्षस्याग्रविशालं तु सप्तमात्रमुदाहृतम्
नाभिसूत्रे तु विस्तारं सार्धविंशांगुलं भवेत् ९५
कटिसन्धेस्तु विस्तारं त्रिषडंशमुदाहृतम्
पादोनकर्मभागं तु स्फिक्पिण्डस्य तु विस्तृतम् ९६
सुवृत्तौ तौ समाख्यातौ तयोर्मध्यं चतुर्यवं
अपरे तारमेवोक्तं पार्श्वव्यासमथोच्यते ९७
कक्षस्याग्रविशालं तु सप्तमात्रमुदाहृतम्
सपादषोडशं मात्रं स्तनसूत्रे तु विस्तृतम् ९८
सपादद्वादशांशं तु मध्यपार्श्वघनं भवेत्
श्रोणिमध्ये घनं पार्श्वे सप्तदशांगुलं भवेत् ९९
ततः श्रोण्युदयं विप्र सप्तमात्रमुदाहृतम्
नाभिसूत्रादधश्चोर्ध्वे चतुर्विंशांगुलं भवेत् १००
श्रोण्यधस्तात्कटेरुच्चं सार्धभूतांगुलं भवेत्
तत्कटेस्तु घनं धीमन्सार्धभान्वंगुलं भवेत् १०१
स्फिक्पिण्डं चोरुमूलात्तु नीप्रं सार्धयुगांगुलम्
तत्पिण्डलं घनं त्वर्धसूत्रादर्धांगुलं भवेत् १०२
कक्षाग्रधरनिम्नं तु सार्धद्व्यंगुलकं भवेत्

कण्ठमूले नतं तारं तुंगं चैव चतुर्यवम् १०३
हिक्कायास्त्वक्षमात्रं च जत्रुसूत्रमुदाहृतम्
हिक्कामध्यात्तु कक्षान्तमग्न्यंशं पादहीनकम् १०४
हृदयं स्तनयोर्मध्ये निम्नमध्यर्धमात्रकम्
नीलं वै कण्ठमूले तु यवत्रयमुदाहृतम् १०५
अत्यर्धायामसंयुक्तं कल्पयेत्तु त्रिपुण्ड्रवत्
कण्ठमूले नतं हिक्का सूत्राधस्तात्प्रकल्पयेत् १०६
हिक्कासूत्रोपरिष्टात्तु नीलवर्णं प्रकल्पयेत्
हृदयस्तनपीठोच्चं द्वयांगुलमुदाहृतम् १०७
सप्तदशयवं ख्यातं स्तनमानीलविस्तृतम्
तन्मध्ये चूचुकोच्चं तु व्यासं चैव यवद्वयम् १०८
नाभेस्तु नतविस्तारं व्योमांशं द्वियवाधिकम्
नाभिः प्रदक्षिणावर्तं मूलतारं यवद्वयम् १०९
तन्नाभिवृत्तमध्यस्थं नाभिसूत्रं द्विजोत्तम
नाभेरधस्तात्पादोनं शृण्वुच्चं पञ्चमात्रकम् ११०
तदधस्तात्कटिश्रोणी सार्धद्वयंगुलमुच्यते
तस्मादामेढ्रमूलान्तं मेढ्रपीठं युगांगुलम् १११
सपादपञ्चभागं तु लिंगदीर्घमुदाहृतम्
लिंगमूलविशालं तु सप्तदशयवाः स्मृतम् ११२
लिंगायामत्रिभागैकमग्रगण्यायतं भवेत्
तदग्रग्रन्धिमूलं तु यवमानं बृहत्तरम् ११३
रक्तोत्पलस्य मुकुळाकारं लिंगाग्रमुच्यते
मुष्कायामं विशालं च सार्धवेदांगुलं भवेत् ११४
घनं सार्धगुणांशं तु तन्मूलोत्थोरुवर्धनम्
मेढ्रपीठस्य मूलस्य व्यासं सप्तार्धमात्रकम् ११५

मेढ्रपीठस्य मूलान्तमूरुमूलस्य मांसलम्
जानुमराडलविस्तारं सपादं चतुरंगुलम् ११६
सार्धद्व्यंगुलकं प्रोक्तं जानुमराडलनीप्रकम्
सार्धद्वियवकं प्रोक्तं पृष्ठजानून्नतं भवेत्
मध्ये तु पार्श्वयोः शेषं यथासौन्दर्यमाचरेत् ११७

इति काश्यपशिल्पे उत्तमदशतालपुरुषमानं नाम पञ्चपञ्चाशत्तमः पटलः समाप्तः

## अथ षट्पञ्चाशत्तमः पटलः
## मध्यमदशतालं स्त्रीमानम्

मध्यमं दशतालेन स्त्रीमानमथ वक्ष्यते
सरस्वती च दुर्गा च उमा भूमिश्च मातरः १
लक्ष्मीश्चैव तु ज्येष्ठा च अनेन विधिना कुरु
ईशो ब्रह्मा तथा विष्णुः शक्तिरित्यभिधीयते २
तेषामनुगुणं मानं तन्मध्ये तेस्तु मानकम्
शंभुनासाग्रसीमान्तं शक्त्युच्चमुत्तमोत्तमम् ३
शंभोर्वै स्तनसीमान्तमधमाधममुच्यते
तयोर्मध्येऽष्टभागे तु नवधाशक्तिमानकम् ४
शंभोर्हिख्यातमुद्दिष्टं स्तनान्तमधमाधमं
तयोर्मधेऽष्टभागे तु नवधाशक्तिमानकम् ५
एवं द्विर्नवधोत्तुंगं पादादुष्णीषसीमकम्
तस्याजात्यंशमायामं योजयेत्सिद्धिरुच्यते ६
श्रीभंगासननृत्तानां चान्यमानवमूर्तिनाम्
देव्युच्चं समपादस्य स्थानकं ह्येव युक्तितः ७
दुर्गा ज्येष्ठा च लक्ष्मीश्च मातरश्च विशेषतः

मानकल्पे तु लिंगाद्यं मानैस्संकल्प्यदेशिकः ८
जात्यं यांशं चैव तन्मानं रोपयोत्तुयथाविधि
मूललिंगस्य गौरीं तु लिंगमानेन कल्पयेत् ९
सविंशतिशतं भागं स्त्रीमाने तु विभाजिते
एकांशमंगुलं ख्यातं तदष्टांशं यवं भवेत् १०
तदंगुलैः यवैश्चैव अंगमानं प्रमीयते
उमादीनां तु देवीनामेतदेवांगुलायतम् ११
उष्णीषोदयमेकांशं केशान्तं तु गुणांगुलम्
केशान्तादक्षिसूत्रान्तं सत्रिपादं युगांशकम् १२
अक्षिसूत्रात्पुटान्तं तु सार्धवेदांशमिष्यते
नासापुटात्तु हन्वन्तं सत्रिपादं गुणांशकम् १३
तस्याधः ग्रीवामानं तु चतुर्भागमुदाहृतम्
कण्ठादाहृदयान्तं च हृदयान्नाभिसीमकम् १४
नाभेश्च योनिपर्यन्तं समं त्रयोदशांगुलम्
ऊरुदीर्घं तु षड्विंशत् जानुदीर्घं युगांशकम् १५
ऊरुदीर्घसमं जंघादीर्घं पादतलं युगं
कलांशं तु तलायामं पाष्ण्यंगुष्ठाग्रसीमकम् १६
तर्जन्यंगुष्ठयोर्दीर्घं चतुर्भागार्धमुच्यते
सार्धत्रिभागं मध्यं स्यात्त्रिभागं तदनामिका १७
सार्धद्विभागमानं तु कनिष्ठांगुलिदीर्घकम्
द्विरष्टसार्धपातालपातालरसभिर्यवैः १८
अंगुष्ठादिकनिष्ठान्तं चरणांगुलिविस्तृतम्
त्रिद्व्यंशं तु नखव्यासं पादोनायतवर्तुळम् १९
अंगुलीनां मुखोच्चं तु नखव्याससमं भवेत्
पादतलाग्रविस्तारं षण्मात्रमिति कथ्यते २०

मध्यं पञ्चांगुलं पार्ष्णिविस्तारं चतुरंगुलम्
अह्निगुल्फान्तविस्तारं पञ्चभागं विधीयते  २१
नळकात्रिवेदांशं जंघामध्यं रसांगुलम्
जान्वोर्व्यासं तु सप्तांशं भान्वंशमूरुमूलकम्  २२
भानुद्विगुणभागं तु विस्तारं कटिबन्धकम्
योनिपीठविशालं तु सप्तांगुलमुदाहृतम्  २३
योनिभागं चतुर्भागमधोगाश्वत्थपत्रवत्
विस्तारसदृशोत्सेधं योनिं कुर्यात्समालयं  २४
श्रोणिस्थाने तु विस्तारं सयवं विंशदंगुलम्
नाभेस्तु नतविस्तारं षड्यवंपरिकीर्तितम्  २५
मध्यमस्य विशालं तु रुद्रांगुलमुदाहृतम्
स्तनाधस्तात्तु विस्तारं सार्धत्रयोदशांगुलम्  २६
स्तनान्तरं नवांशं स्यात् द्विगुणं स्तनचूचुकम्
स्तनोच्चं सार्धवेदांशमक्षमर्धांगुलोन्नतम्  २७
स्तनाक्षं च स्तनं चैव वृत्तं कुर्यात्तु सुन्दरम्
स्तनान्तरं यवाष्टांशं चिन्तविरं च तत्र वै  २८
अक्षयोरन्तरं विप्र सपतदशांगुलं स्मृतम्
बाहुपर्यन्तविस्तारमेकत्रिंशांगुलं भवेत्  २९
हिक्काधो बाहुदीर्घं तु षड्विंशदंगुलं भवेत्
कूर्परोच्चं द्विभागं स्यात्प्रकोष्ठं द्विनवांगुलम्  ३०
मणिबन्धात्तलायामं सप्तांगुलमुदाहृतम्
तन्मध्यमांगुलिः षड्भिः पञ्चभिस्तर्जनी भवेत्  ३१
अनामिका तर्जनीवत् युगांगुष्ठकनिष्ठयोः
अंगुलीनां दीर्घमेवं हस्तयोरुभयोरपि  ३२
नवसप्ताष्टसप्तर्तुयवांगुष्ठादिविस्तृतं

तत्षडंशे च भागं तु नखतारमिहोच्यते ३३
यवद्वयाधिकं तारं नखायामं तु तीक्ष्णवत्
हस्तस्य तलविस्तारं पञ्चांगुलं विधीयते ३४
मणिबन्धविशालोग्निः भूतांशं कूर्परस्य तु
षडंशं बाहुविस्तारं सप्तांशं बाहुमूलकम् ३५
तस्मादामणिबन्धान्तं तरुणवेणुवत्कृशम्
हस्तविस्तारमेवं स्यात् सप्तांशं ग्रीवविस्तृतम् ३६
अग्रेमूले तु विस्तारं वस्वंशं स्याद्यवाधिकम्
रुद्रांशं मुखविस्तारं कुक्कुटाण्डसमाकृति ३७
भ्रुवः केशान्तस्य मध्यं सार्धं तु द्व्यंगुलं भवेत्
भ्रूमध्यान्नेत्रसूत्रान्तं सपादद्व्यंगुलं भवेत् ३८
पूटादास्यावसानं तु सयवैकांगुलं भवेत्
तदर्धं गोजिदीर्घं तु तदर्धं तस्य विस्तृतम् ३९
त्रिभागं कर्णविस्तारं सपादचतुरंशकम्
कर्णदीर्घमिति ख्यातं तस्मान्नाळं प्रलंबयेत् ४०
हस्तिहस्तोपमं पादं भान्वंगुलं भवेत्
शेषमुक्तं तु तालोक्तमार्गेणैव समाचरेत् ४१
स्त्रीणां सामान्यमेतद्धि विशेषमधुना शृणु

अथ गौरीलक्षणम्

गौरी वै द्विभुजा शान्ता द्विनेत्रा षट्प्रसारिता ४२
करण्डमुकुटा वाथ किरीटमुकुटान्विता
मुकुटं केशबन्धं वा तेषु वै सुन्दरं कुरु ४३
केशान्तमुकुटोत्सेधमष्टादशांगुलाधमम्
एकविंशांगुलं मध्यं श्रेष्ठं भानुद्वयांगुलम् ४४
यवाधिकं शिरोनाहात् मुकुटमूलविस्तृतम्

मूलं सप्ताष्टधाभज्य भागोनाग्रविशालकम् ४५
कीरीटमकुटं चैवं केशबन्धैवमाचरेत्
मूलादाग्रं क्रमात्त्क्षीणं करण्डमकुटस्य तु ४६
पद्मस्य मुकुळाकारं मुकुटाग्रं प्रकल्पयेत्
त्रिपञ्चसप्तनान्दैर्वा करण्डैस्तु विराजितम् ४७
चतुष्पूरिमसंयुक्तं नानापुष्पैर्विराजितम्
हारोपग्रीवसंयुक्तं मुक्तादामैरलंकृतम् ४८
कर्णौ कुण्डलसंयुक्तौ चतुर्मात्रोन्नतायतौ
मुकुटं कुण्डलं वाथ वृत्तं कुण्डलमेव वा ४९
कटकैः कटिसूत्रं च हारोपग्रीवसंयुतम्
बाहुपूरिमसंयुक्तं छन्नवीरसमन्वितम् ५०
यज्ञोपवीतसंयुक्ता केयूराढ्या सुशोभना
दुकूलवसना देवी श्यामवर्णा च सुस्तनी ५१
उत्पलं दक्षिणे हस्ते वामहस्तं प्रलंबितम्
आभंगं समभंगं वा कल्पयेदतिसुन्दरम् ५२
दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम्
आभंगे तु गुणांशं तु पदांशं समभंगके ५३
नतमानं समाख्यातं सूत्रं वक्ष्ये यथाक्रमम्
ललाटमध्याद्वामे तु नेत्रान्ते च पुटान्तके ५४
हनोर्वामे समालंब्य स्तनयोरन्तरे तथा
नाभेर्दक्षिणपार्श्वे तु वामोरुदक्षिणं स्पृशन् ५५
अवामचरणे पार्ष्णिवामपार्श्वे तु लंबयेत्
पादांगुष्ठद्वयोश्चैवाप्यन्तरं षोडशांगुलम् ५६
तत्र भागैकभागं तु पार्ष्ण्यर्यन्तरमुदाहृतम्
एवमाभंगमाख्यातं समभंगमथ शृणु ५७

ललाटमध्ये नासाग्रे पादपार्ष्ण्योश्च मध्यमे
प्रसार्यं ब्रह्मसूत्रं तु द्व्यन्तरं तु प्रमीयते ५८
तत्सूत्रात्स्तनयोर्मध्यं दक्षिणे तु गुणांगुलम्
तत्सूत्रात् वामतोनाभिनीप्रं द्व्यंगुलकं भवेत् ५९
तत्सूत्रात् वामतोयोनिमूलमध्यं युगांगुलम्
तत्सूत्रात् दक्षिणे जानुनीप्रं गुणांगुलं भवेत् ६०
शेषं पूर्ववदुद्दिष्टं गौरीलक्षणमेव हि
सरस्वत्यादिशक्तीनां प्रागेव प्रोच्यते तव ६१

इति काश्यपशिल्पे मध्यमदशताले स्त्रीमानकथनं नाम
षट्पञ्चाशत्तमः पटलः समाप्तः

## अथ सप्तपञ्चाशत्तमः पटलः
## अधमदशतालम्

कनिष्ठं दशतालेन शृणु वक्ष्ये द्विजोत्तम
चन्द्रादित्यावश्विनौ च ऋषींश्चैव गुहं तथा १
आर्यं शतमखं चैव चण्डेशं क्षेत्रपालकम्
कनिष्ठदशतालेन कारयेत्तु विचक्षणः २
कलाधिकशतांशं स्यात् अधमं दशतालकम्
उष्णीषमंगुलं प्रोक्तं केशान्तं तु गुणांगुलम् ३
केशान्तात् हनुपर्यन्तं सार्धभान्वंगुलं भवेत्
युगांगुलं समाख्यातं कण्ठमानं द्विजोत्तम ४
हिक्कातस्स्तनमूलान्तं सार्धद्व्यंगुलकं भवेत्
स्तनादानाभिपर्यन्तं तत्समं चेति कीर्तितम् ५
नाभेस्तु मेढ्रमूलान्तं सार्धद्वादशमात्रकम्
मेढ्रमूलात्तु जान्वंतं पञ्चविंशतिमात्रकम् ६

वेदभागं तु जानु स्यात् जंघा चोरु समा भवेत्
वेदांशं चरणोत्सेधं तुंगमेवं विधीयते ७
उष्णीषात् पृष्ठकेशान्तं सार्धभान्वंगुलं भवेत्
उष्णीषपार्श्वकेशान्तं पञ्चांगुलमुदाहृतम् ८
केशान्ताद्धनुपर्यन्तं मानं तु गुणभाजिते
केशान्तादक्षिसूत्रान्तं पुटान्तं हनुमानकम् ९
यवोपेतद्विमात्रं तु नेत्रयोरन्तरं द्विज
तत्समं नयनायामं भूतमात्रं तु वाऽऽयतम् १०
भ्रूमध्यादूर्ध्वकेशान्तं सप्तदश यवाः स्मृताः
यवं भ्रूमध्यविस्तारमानुपूर्व्यात्तदग्रकम् ११
षड्यवं नेत्रविस्तारमूर्ध्ववर्मयवार्धकम्
अधोवर्म तु तत्तुल्यं करवीरयवं भवेत् १२
नेत्रायामं त्रिधा कृत्वा एकांशं कृष्णमंडलं
कृष्णमंडलमध्ये तु ज्योतिर्यवप्रमाणकम् १३
यवमानेन दृष्टिः स्यात् ज्योतिर्मंडलमध्यमे
अधो वर्मणि तन्नेत्रसूत्रं कुर्याद्विशेषतः १४
तस्य केशान्तयोर्मध्ये भ्रूस्थितिर्बालचन्द्रवत्
कर्णस्थानं च कर्णं च उत्तमदशतालवत् १५
घ्राणमूलस्य विस्तारं उत्तमदशतालवत्
नासिकाग्रविशालं तु व्योमांगुलमुदाहृतम् १६
अधरोष्ठस्य चायामं पद्मांगुलमुदाहृतम्
तदर्धं तस्य विस्तारं चिबुकं च द्व्यांगुलम् १७
विस्तारं तत्समं विद्यात् निम्नमर्धयवं भवेत्
तस्मादधरनिष्क्रान्तं यवो न व्योममात्रकम् १८
ग्रीवामूलविशालं तु वस्वंगुलमुदाहृतम्

ग्रीवाग्रस्य तु विस्तारं सार्धसप्तांगुलं भवेत् १९
वक्षस्स्थलस्य विस्तारं सप्तत्रिंशतिमात्रकम्
पञ्चविंशतिमात्रं तु बाहुदीर्घमुदाहृतम् २०
आयामं तु प्रकोष्ठस्य एकोनविंशदंगुलम्
तस्मादामध्यमाग्रान्तं सार्धद्वादशमात्रकम् २१
तदर्धं तु तलायामं शेषं मध्यांगुलायतम्
अंगुष्ठस्य तु दीर्घं तु अष्टादशयवाः स्मृताः २२
सार्धवेदांगुलं प्रोक्तमनामायास्तु दीर्घकम्
तदेव तर्जनी दीर्घं कनिष्ठाया युगांशकम् २३
धर्माब्धिवसुभूतमंगुष्ठादिततं यवम्
तन्मूलेऽष्टांशहीनं तु शेषमग्रविशालकम् २४
अग्रव्यासे तु भूतांशे वेदांशं नखविस्तृतम्
विस्तारात्पादमधिकं नखायाममुदाहृतम् २५
अंगुष्ठे तु द्विपर्व स्यादन्येषां तु त्रिपर्वकं
तलमध्यमरेखाभिः शूलाभं पार्श्ववत्तले २६
तलमूलप्रदेशस्य घनं कोलकमुच्यते
अष्टांशहीनमग्रं तु घनमित्यभिधीयते २७
तलायामसमं ज्ञेयं तलस्यैव तु विस्तृतम्
मणिबन्धस्य विस्तारं त्रिमात्रं द्वियवाधिकम् २८
प्रकोष्ठमूलविस्तारं सार्धभूतांशमुच्यते
बाह्वग्रस्य तु विस्तारं सार्धषण्मात्रमुच्यते २९
बाहुमध्यविशालं तु सप्तांगुलमुदाहृतम्
हिक्कासूत्रं तु कक्षान्तं वस्वंगुलमुदाहृतम् ३०
द्वाविंशदंगुलं प्रोक्तं कक्षयोरंतरं बुध
हृदयावधिविस्तारमष्टादशांगुलं भवेत् ३१

उदरस्य विशालं तु सप्तदशांगुलं भवेत्
श्रोणिप्रदेशविस्तारं दशांगुलमुदाहृतम्  ३२
षडयवं नाभिविस्तारं निम्नमर्धयवं भवेत्
उभयोस्तनयोरन्तः सार्धद्वादशमात्रकम्  ३३
चूचुकाग्रस्य विस्तारमुत्सेधं तत्समं भवेत्
मुष्कायामं तु वेदांशं विस्तारं चैव तत्समम्  ३४
लिंगं पञ्चांगुलायामं तदग्रं मुकुळोपमम्
कटिप्रदेशविस्तारं षडयवाष्टादशांगुलम्  ३५
ऊरुमूलविशालं तु सार्धाष्टमात्रमुच्यते
जानुमध्यविशालं तु सार्धषण्मात्रमुच्यते  ३६
नळकायास्तु विस्तारं सार्धवेदांगुलं भवेत्
अंघ्रितलाग्रविस्तारं कौशिकांगुलमुच्यते  ३७
तलमध्यविशालं तु भूतांगुलमुदाहृतम्
पादांगुष्ठसमायामं चतुर्मात्रमुदाहृतम्  ३८
तस्याग्रात् गुल्फमण्यन्तं सार्धद्वादशमात्रकम्
अनामिकाया दीर्घं तु त्रयस्त्रिंशद्यवं भवेत्  ३९
मध्यांगुलिस्तु तत्तुल्यं वेदांशं तदनामिका
कनिष्ठिकाया दीर्घं तु सार्धोनं द्व्यंगुलं भवेत्  ४०
सप्ताष्टनवधर्माख्यत्रयोदशयवं क्रमात्
कनिष्ठाद्यंगुलीनां तु विस्तारः प्रविधीयते  ४१
अग्रमूलसमं प्रोक्तं विस्तारं तु त्रिभाजिते
द्विभागं नखविस्तारं तत्तुल्यायतवर्तुलम्  ४२
तलाग्रांगुष्ठमूले तु द्विमात्रं तु घनं भवेत्
कनिष्ठायास्तु मूले तु घनं नवयवं भवेत्  ४३
अङ्घ्रात्पाष्ण्यर्न्तरं भागं पाष्ण्युर्त्सेधं च तत्समम्

पृष्ठमण्डलविस्तारं पादोनं नवमात्रकम् ४४
वक्षस्स्थले परे व्यासं पञ्चविंशतिमात्रकम्
अक्षयोरन्तरं प्रोक्तं चतुर्विंशतिमात्रकम् ४५
अत्रानुक्तं तु यत्सर्वमुत्तमदशतालवत्
येषां लक्षणमाख्यातं तेषां पूर्ववदाकृतिः ४६
इति काश्यपशिल्पे अधमदशतालकथनं नाम सप्तपञ्चाशत्तमः पटलः

अथाष्टपञ्चाशत्तमः पटलः

उत्तमनवतालम्

नवतालोत्तमं वक्ष्ये शृणुष्वैकाग्रमानसः
वसवोष्टमूर्तयश्च विद्येशा लोकपालकाः १
अन्याश्च देवताश्चैव नवतालोत्तमेन तु
सद्वादशशतं भागं बेरमाने विभाजिते २
उष्णीषमेकभागं तु केशान्तं तु गुणांगुलम्
केशान्तादक्षिसूत्रान्तं वेदमात्रं विधीयते ३
तस्मादापुटसीमान्तं हन्वन्तं वेदमात्रकम्
कण्ठमानं तु वेदांशं भान्वंशं हृदयावधि ४
हृदयान्नाभिसीमान्तं तथा द्वादशमात्रकम्
नाभ्यादिमेढ्रमूलान्तं भानुमात्रं विधीयते ५
ऊरुदीर्घं चतुर्विंशदंशं जानुयुगांशकम्
जंघादीर्घं चोरुतुल्यं वेदांशं तु पदोदयम् ६
हिक्काधो बाहुदीर्घं स्यात् चतुर्विंशति भागकम्
द्विर्नवांशं प्रकोष्ठं स्यात् द्वादशांशं तलायतम् ७
तस्मान्मध्यांगुलायामं षडंगुलमुदाहृतम्

कन्यसदशतालोक्तमार्गेण शेषमाचरेत् ८
तस्मादवयवार्थं च प्रत्येकमेवमाचरेत्
मानमेवं समाख्यातं लक्षणं कथितं पुरा ९
इति काश्यपशिल्पे उत्तमनवतालकथनं नाम अष्टपञ्चाशत्तमः पटलः समाप्तः

अथैकोनषष्टितमः पटलः
मध्यमनवतालम्

मध्यमं नवतालं तु वक्ष्ये संक्षेपतः क्रमात्
यक्षाप्सरोगणाश्चैव अस्त्रमूर्तिर्मरुद्गणाः १
मध्यमनवतालेन कर्तव्या द्विजसत्तम
अष्टोत्तरशतांशे तु प्रतिमोच्चे विभाजिते २
उष्णीषं व्योमभागेन केशं पादोनकानलम्
केशान्तान्नेत्रसूत्रान्तं चतुर्भागं यवोनकम् ३
पुटान्तं चैव तत्तुल्यं हन्वन्तं च तथा भवेत्
पादोनचतुरंशं तु ग्रीवामानमुदाहृतम् ४
त्रियवोनं तु भान्वंशं हिक्कातो हृदयावधि
नाभ्यन्तं चैव तत्तुल्यं मेढ्रमूलान्तकं तथा ५
पादाधिकगुणांशं च विंशांशं चोरुदीर्घकम्
जानुग्रीवसमं तुंगं जंघा चोरुसमा भवेत् ६
जानुतुल्यं तलायामं बाहुश्चोरुसमो भवेत्
सप्तदशांगुलं प्रोक्तं प्रकोष्ठस्य तु दीर्घकम् ७
षडंशं च यवोनं तु तलायामं करस्य तु
तत्समं मध्यमायामं शेषं युक्त्या समाचरेत् ८
इति काश्यपशिल्पे मध्यमनवतालकथनं नाम

एकोनषष्टितमः पटलस्समाप्तः

## अथ षष्टितमः पटलः

## अधमनवतालम्

अधमनवतालस्य लक्षणं वक्ष्यतेऽधुना
विद्याधरगणाश्चैव असुराश्च तथैव च १
पितरस्सिद्धगन्धर्वाः नवतालाधमेन तु
सवेदशतभागं तु कौतुकोच्चे विभाजिते २
उष्णीषोच्चं त्रिपादं स्यात् केशं सार्धत्रिभागकम्
केशांतान्नेत्रसूत्रांतं पादोनचतुरंशकम् ३
तस्मान्नेत्राद्धि हन्वन्तमाननं स्यात्तथोदितम्
भवेद्वेदांगुलं ग्रीवामानमित्यभिधीयते ४
सपादं रुद्रभागं तु हिक्कादाहृदयांतकम्
तस्मान्नाभ्यन्तरं तद्वत् मेढ्रमूलांतरं तथा ५
ऊरुदीर्घं तु द्वाविंशन्मात्रमेव विधीयते
ग्रीवायतं तलं जानु जंघोरुसदृशायता ६
बाहुदीर्घं चोरुसमं प्रकोष्ठं षोडशांगुलम्
तलदीर्घं तु भूतांशं तत्समं मध्यमांगुलिः
शेषं युक्त्या तु कर्तव्यं सर्वांगं तु विधीयते ७

इति काश्यपशिल्पे अधमनवतालकथनं नाम षष्टितमः
पटलस्समाप्तः

## अथैकषष्टितमः पटलः

## अष्टताललक्षणम्

अथ वक्ष्ये विशेषेण अष्टतालविधिं परम्

शतांशं मध्यबिंबोच्चमुष्णीषं तु शिवांशकम् १
सार्धद्व्यंशं तु केशांतं केशांताद्धनुसीमकम्
पादोनदशभागं स्यात्तत्रिभागविभाजिते २
शिवांशं त्वक्षिसूत्रांतं पुटांतं चैव तत्समम्
पुटाद्धन्वन्तकं शेषं सार्धत्र्यंशं गळोदयम् ३
हिक्कादिहृदयांतं तु रुद्रांशं द्वियवोनकम्
नाभ्यंतं चैव तत्तुल्यं मेढ्रमूलांतकं तथा ४
सार्धत्रिसप्तभागं तु ऊरुदीर्घमुदाहृतम्
जानुकण्ठसमं तुंगं जंघा चोरुसमा भवेत् ५
जानु तुल्यं तलोत्सेधं बाहुश्चोरुसमायतः
प्रकोष्ठं तु षोडशांशं सार्धभूतांगुलं तलम् ६
तत्समं मध्यमांगुल्यं शेषं प्राग्वदिहोदितम्
अत्रानुक्तं तु यत्सर्वं कन्यसदशतालवत् ७
इति काश्यपशिल्पे अष्टतालकथनं नाम एकषष्टितमः पटलस्समाप्तः

## अथ द्विषष्टितमः पटलः

### सप्तताललक्षणम्

अथ वक्ष्ये विशेषेण सप्ततालविधिं परम्
पिशाचप्रतिमोत्सेधं साष्टाशीत्यंशकं भवेत् १
उष्णीषमर्धभागेन केशांतं शशिभागतः
सार्धद्व्यंशं तु नेत्रांतं सार्धाग्न्यंशं पुटांतकम् २
चिबुकांतं च तत्तुल्यं वेदांशं च गळोदयम्
स्तनांतं सप्तभागं तु रुद्रांशं नाभिसीमकम् ३
तथा वै योनिमूलांतं विंशांशं चोरुदीर्घकम्
जानुमानं द्विभागेन जंघा चोरुसमाभवेत् ४

चरणोच्चं द्विभागेन मन्वंशं तु तलोन्नतम्
ऊरुदीर्घसमं बाहुः प्रकोष्ठांतं त्रिपञ्चकम् ५
तलायामं तु भूतांशं वेदांशं तस्य विस्तरम्
तलायामस्य सदृशं मध्यमांगुलिदीर्घकम् ६
शेषं प्रागुदिते देशे ह्रासं कुर्यादतीन्द्रियम्
सप्ततालं समाख्यातं शेषं प्रागिव चोदितम् ७
इति काश्यपशिल्पे सप्तताललक्षणं नाम द्विषष्टितमः पटलस्समाप्तः

अथ त्रिषष्टितमः पटलः
मूर्तिस्थापनविधिः

अथ शैवानंतरं स्यात् विष्णोस्तु स्थापने विधिः
नगरे पश्चिमे वापि मध्ये वा उत्तमोत्तमम् १
मत्स्यादिकल्क्यंतकं वा अवतारं तु शंसितं
तत्पदे वास्तुदेवांश्च स्थापयेत् शिल्पिकोत्तमः २
खगं तु विष्णुपुरतः विष्णुकुञ्जमथापि वा
अञ्जलिहस्तसंयुक्तं पूर्वे वा अग्रतस्तथा ३
आलये रण्यके वापि तटाके पुण्यतीर्थके
ग्रामे वा वास्तुमध्ये वा भवेत्पूर्व उदङ्मुखे ४
वारुणे वैश्यभूमिं च यममिन्द्रं तु स्थापयेत्
पिशाचाग्नौ पदे स्थाप्य नैर्ऋतिं वायुमर्चयेत् ५
अथ वक्ष्ये विशेषेण सकलस्थानमुत्तमम्
शांकरे नृत्तमूर्तिं तु आग्नेय्यां वृषवाहनम् ६
उमास्कन्दयुतं विप्र नैर्ऋत्यां परिकल्पयेत्
कंकाळं वायुदिग्भागे भिक्षाटनं जयान्तिके ७
सुखासनं तु सत्यांशे विध्यंशे त्रिपुरांतकम्

सुग्रीवे हरिरर्धं स्याद्गन्धर्वे चन्द्रशेखरम् ८
शेषे चराडानुग्रहं च मुख्ये कालारिमूर्तिकम्
उदिते त्वर्धनारीशं ऐन्द्रे कल्याणसुन्दरम् ९
क्षेत्रपालं तु पर्जन्ये याम्ये वा दक्षिणेश्वरम्
लिंगोद्भवं वारुणे च सौम्ये तु गजहारिणम् १०
इत्युर्ध्वमालयं प्रोक्तमन्तराळस्य कल्पयेत्
मूलमध्ये तु संवीक्ष्य सकलं स्थापनं कुरु ११
प्राकारेष्टचतुर्दिक्षु द्वारशोभादि कल्पयेत्
प्राकारान्तादिमध्ये च दीर्घमध्ये च वेशनम् १२
अथवा हर्म्यस्य मध्येन द्व्येकमंशकम्
प्रधानमारमेकं वा त्वग्नेवाचालकं द्विज १३

इति काश्यपशिल्पे सकलमूर्तिस्थापनविधिर्नाम त्रिषष्टितमः पटलस्समाप्तः

## अथ चतुष्षष्टितमः पटलः

## सुखासनमूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण सुखासनविधिं परम्
आसनं राजसं भावं भद्रपीठोक्तमासनम् १
वामांघ्रिं शाययेत्पीठे दक्षिणांघ्रिं तु लंबयेत्
ऊर्ध्वभागोपरिष्ठात्तु सार्धवेदांगुलाधिकम् २
स्फिक्पिराडमानमेतद्धि आसीनोर्ध्वे विशेषतः
आसने पूर्वकेशान्तं जान्वोर्बाह्यावसानकम् ३
जानूर्ध्वं पूर्वकेशान्तं जानुबाह्याग्रबाह्यकम्
परहस्तमणिबन्धमध्यमं च समं भवेत् ४
आसने नवसूत्राणि पूर्वसूत्रे धुना शृणु

मौळिमध्यं तु नासाग्रे स्तनान्ते नाभिमध्यमे ५
वामांघ्रिगुल्फमध्ये तु ब्रह्मसूत्रं प्रलंबयेत्
सूत्राद्दक्षिणजान्वन्तमेकत्रिंशांगुलं भवेत् ६
अथवा त्रिंशदंगुल्यमेकोनत्रिंशतं तु वा
सूत्रात्तदंघ्रिनळका द्वान्तरं द्वादशांगुलम् ७
त्रयोदशांगुलं वाथ दशांगुलमथापि वा
पीठात्तदङ्घ्रिपार्ष्णोस्तु नीप्रं द्वित्र्यंगुलं तु वा ८
तत्सूत्रादुभयोः हस्ते मध्यरेखावसानकम्
चतुर्दशांगुलं प्रोक्तमन्तरं तु द्विजोत्तम ९
भानुमध्यांगुलाग्रं तु --- कोर्ध्वसमं भवेत्
तत्सूत्रात्कटके हस्ते मणिबन्धस्य मध्यमात् १०
पञ्चदशांगुलं प्रोक्तमन्तरं द्विजसत्तम
ऊरोस्तु मणिबन्धान्तं नीप्रं द्वित्र्यंगुलं तु वा ११
कटकं सिंहकर्णं वा तद्धस्तं प्रतिधीयते
तर्जन्यादिकनिष्ठान्तं तत्रांगुल्यस्तु वक्रगाः १२
ईषद्वक्रं तदंगुष्ठमेवं स्यात्कटकाकृतिः
मध्यामध्यतलान्तं तु अर्धमर्धं त्वनामिका १३
वक्रं शेषांगुलं प्राग्वत्सिंहकर्णमिदं परम्
हिक्कासूत्रसमं कुर्यात्कर्तर्यग्रौ परे करे १४
वक्रावनामिकांगुष्ठौ तलमध्यावसानकौ
किञ्चिद्वक्रा कनिष्ठापि शेषौ द्वौ तु ऋजुक्रियौ १५
कर्तव्या कृतिरेवं स्यात् लक्षणाञ्चितसुन्दरम्
कूर्परं श्रोणिपार्श्वे तु पञ्चषट्सप्तमात्रया १६
कुक्षिमध्ये च नासाग्रे पूर्वसूत्रं तु संस्पृशेत्
मेढ्रमूलात्तु वामांघ्रि गुल्फमध्यं रसांगुलम् १७

अथवा सप्तमात्रं तु पञ्चमात्रमथापि वा
नाभिमध्यात्तु वामांघ्रि नळकाग्रं चतुर्दश १८
त्रयोदशांगुलं वाथ भान्वंगुलमथापि वा
मौल्यग्रात् मध्यसूत्रान्तमन्तरं मनुमात्रकम् १९
सार्धत्रयोदशांशं वा त्रयोदशांशमेव वा
ऋज्वागतं सुखासीनं प्रवाळसदृशप्रभम् २०
त्रिणेत्रं सुष्ठुवदनं संपन्नं राजसं गुणम्
व्याघ्राजिनांबरोपेतं दुकूलवसनान्वितम् २१
कर्तरीपरहस्तौ द्वौ बाह्ये वाभ्यंतराननं
दक्षिणे परशुः वामे कृष्णश्चान्यकरद्वये २२
अभयं दक्षिणं वामं कटकं सिंहकर्णवत्
वामे कर्णविशेषेण शंखपत्रं निधापयेत् २३
त्रिचतुः पञ्चमात्रं वा पत्रमण्डलविस्तृतम्
कर्णनाळघनं चैव त्रिगुणं पत्रविस्तृतम् २४
एवं पत्रघनं प्रोक्तं श्वेतभान्वादिमार्दवत्
दक्षणे कर्णमेवं तु कुण्डलं सिंह एव वा २५
कुण्डलव्यासतुंगं तु त्रिचतुः पञ्चमात्रकम्
युक्त्या तत्कुण्डलं कृत्वा कर्णात्स्कन्धोपरिन्यसेत् २६
अथवा कर्णयोर्विप्र वृत्तकुण्डलकं न्यसेत्
वृत्तकुण्डलविस्तारमष्टादशयवं भवेत् २७
वेदांगुलं तु तत्तुंगं कुंभाब्जमुकुळोदयम्
अन्यद्वा सुन्दरोपेतं कल्पयेत् वृत्तकुण्डलम् २८
जटामुकुटसंयुक्तं युग्मसंख्याजटान्वितम्
मुकुटस्योदयं विप्र चतुर्विंशांगुलं भवेत् २९
त्रिसप्तांगुलतुंगं वा द्विर्नवांगुलमेव वा

केशान्तमकुटोच्चं तु ललाटपट्टसंयुतम्  ३०
मुखान्तसदृशं विप्र मकुटमूलविशालकम्
तत्सप्ताष्टनवांशेन हीनमग्रविशालकम्  ३१
चतुष्पूरिमसंयुक्तं भान्वंशं पूरिमोदयम्
सव्ये नागार्कपुष्पं च वामे त्वर्धशशिं न्यसेत्  ३२
दक्षिणेर्धशशिर्वाथ वामे नागार्कपुष्पभृत्
कटिसूत्रं त्रिसंख्यादिसूत्रं प्रतियवं घनम्  ३३
कटिसन्ध्युपरिष्टात्तु कटिसूत्रं तु बन्धयेत्
पञ्चषट्सप्तमात्रं वा कीर्तिमाननविस्तृतम्  ३४
तद्विस्तारसमोत्तुंगं मेढ्रोर्ध्वं परिकल्पयेत्
कटिसूत्रादूरुदाममूरुत्र्यंशावसानकम्  ३५
मुक्तादामोरुदामस्यादन्तरे रत्नसंयुतम्
कटिसूत्रं समाख्यातं कटक वलयान्वितम्  ३६
कटकवलयोपेतं प्रकोष्ठं द्विजसत्तम
कनिष्ठांगुलिपरीणाहं वलयं मार्दवं हि तत्  ३७
अथवा वलयस्यैव घनं द्वित्रियवं तु वा
पराजितं तु वलयं युग्मं प्रकोष्ठनिधापयेत्  ३८
मार्दवं रत्नबन्धं वा कृत्वा तु वलये द्विज
केयूरं कूर्परे न्यस्य वलयस्य घनान्वितम्  ३९
एकाकारं तु केयूरं वाष्टपत्राब्जसंयुतम्
नानारत्नसमायुक्तं शैलवाहमथापि वा  ४०
पत्रपूरिमसंयुक्तं बाहुमध्ये द्विजोत्तम
पत्रपूरिमनाळं तु केयूरसदृशं घनम्  ४१
तत्पूरिमादधोनाळं बाहुद्वित्रिपरं तु वा
त्रिचतुःपञ्चमात्रं वा पत्रपूरिमविस्तृतम्  ४२

तद्व्यासार्धतुंगं पादोनं द्विगुणं तु वा
द्विगुणं वापि तुंगं तु तद्बाहुवलयं भवेत् ४३
मध्यांगुल्या विना शेषास्त्वंगुल्यः मुद्रिकान्विताः
मुद्रिकामूलपर्वस्था वृत्तायावसनान्वितं ४४
उदरबन्धविशालं चैकद्वित्रियुगं तु वा
यवं वा द्वियवं वाथ उदरं बन्धनं भवेत् ४५
नानालंकारसंयुक्तं नानारत्नैर्विचित्रितम्
नाभेरूर्ध्वे गुणांशं तु नीत्वा दारुविवर्धयेत् ४६
पादयोः मध्यमान्याश्चाप्यंगुल्यो वलयान्विताः
कालयवद्वयघनमंगुलानां तुलीयकमध्यमम् ४७
पादौ जालकसंयुक्तौ गुल्फाधस्तात् द्विजोत्तम
पादका बन्धसूत्रं तु यवद्वयघनान्वितम् ४८
तत्सूत्रजालनाळं स्यात्त्रिपञ्चयवमानकम्
त्रियवं जालकानाळं शेषं वै जालकोदयम् ४९
तदुन्नतसमं व्यासं यवमानं च तत्समम्
शेषं हीनं घनं गाढं यस्य यच्च यथोचितम् ५०
गाढावृतं तु युक्तं स्यादन्तः पाषाणसंयुतम्
घनं पाषाणहीनं तु गाढनीप्रं तदोच्यते ५१
परशुहरिणीदीर्घं भान्वंगुलमुदाहृतम्
परशुं हरिणीं चैव युक्त्या सौन्दर्यमाचरेत् ५२
यज्ञोपवीतसंयुक्तं यवाष्टांशघनान्वितम्
उपवीतं द्विसूत्रं स्यात् उपवीतसमं घनं ५३
वासः स्कन्धोपरि न्यस्य नाभ्यधस्तात्तदंगुलम्
यज्ञोपरीतसूत्रं स्यात् नाभेर्दक्षिणपार्श्वके ५४
अपरे वाममाश्रित्य यज्ञसूत्रं निधापयेत्

ऊरुसूत्रं समालंब्य स्तनादष्टांगुलोत्तरम् ५५
यज्ञोपरीतमेवं स्यात् छन्नवीरमथ शृणु
यज्ञोपवीतवत् विप्र स्कन्धयोरुभयोरपि ५६
पार्श्वयोश्चैव श्रेरयूर्ध्वे सप्तानां च तथैव च
ग्रीवाहारं विजानीयात् हिक्काधस्तात् षडंगुलम् ५७
लंब्ये वेदांगुलं तारं यवत्रयघनान्वितम्
नानारत्नैर्हिररयैश्च हारं कृत्वातिसुन्दरम् ५८
हिक्कासूत्रोपरिष्टात्तु उपग्रीवं च बन्धयेत्
रुद्राक्षं वाथ रत्नं वा हेमसूत्रमथापि वा ५९
उपग्रीवं समाख्यातं नानापुष्पविराजितम्
कर्णादुदरबन्धं वा ह्यक्षमालां तु लंबयेत् ६०
एतत् हृदयमाला स्यात्स्कन्धमाला तथोच्यते
स्कन्धे तु स्कन्धमाला स्यात् नानावृक्षैर्विराजितं ६१
सर्वांगसुन्दरं देवं शेषं युक्त्या समाचरेत्
एवं सुखासनं प्रोक्तमुमास्कन्दयुतं शृणु ६२

इति काश्यपशिल्पे सुखासनमूर्तिलक्षणं नाम चतुष्षष्टितमः पटलः समाप्तः

## अथ पञ्चषष्टितमः पटलः

## सोमास्कन्दलक्षणम्

अथ वक्ष्ये विशेषेण सोमास्कन्देश्वरं द्विज
सुखासनं यथा प्रोक्तं तथेदं च विधीयते १
देवस्य वामपार्श्वे तु पार्वतीं च सुखासनां
शाययेत् दक्षिणं पादं वामपादं प्रलंबयेत् २
आसनस्योपरिष्टात्तु स्फिक्पिरडं चतुरंगुलम्

ऊर्ध्वकायसमायुक्तमासनोपरिकल्पयेत् ३
किञ्चिद्देव्याश्रितं वक्त्रं लक्षणं भागसंयुतम्
वरदं वामहस्ते तु उत्पलं दक्षिणे करे ४
किंचित् वक्रांगुलाः सर्वे वामहस्तं तदूर्ध्वगम्
वरदं चाभयं ख्यातं पुष्पधृक्सिंहकर्णकम् ५
सस्य श्यामनिभां देवीं सर्वाभरणभूषिताम्
रक्तांबरधरां देवीं छन्नवीरसमन्विताम् ६
अथवान्यप्रकारेण देवी भंगं वदामिते
वामोरुबाह्यपीठे तु वामहस्ततलं न्यसेत् ७
प्राग्वदुत्पलसंयुक्तं दक्षिणं हस्तमुच्यते
पीठात्तु दक्षिणं हस्तं किंचिदुच्चायतं स्मृतम् ८
त्रिचतुःपञ्चमात्रं वा पीठजान्वन्तरं भवेत्
षट्सप्ताष्टांगुलं वाथ पीठं जान्वन्तरं भवेत् ९
एवं द्विविधमित्याहुः देवीभंगं विधीयते
स्त्रीमाने तूक्तमार्गेण देवीमानं तु गृह्यताम् १०
आसने चासनं ख्यातं विपरीतं विपत्करम्
देवीलक्षणमेवं वा स्कन्दलक्षणमुच्यते ११
देविदेवेशयोर्मध्ये स्थापयेत्स्कन्दमूर्तिकाम्
देव्या हिक्कावसानं तु स्कन्दमानं तदुत्तमम् १२
स्तनाक्षान्तं कनिष्ठं स्यात्तयोर्मध्येष्टभाजिते
नवधा स्कन्दमानं तु उत्तमादित्रयं त्रयम् १३
जात्याव्यासयुतं वापि हीनं वापि प्रकल्पयेत्
सवेदरसधर्मांशं तन्मानं तु विभाजिते १४
एकांशमंगुलं ख्यातं तदष्टांशं यवं भवेत्
एकांगुलं शिरोमानं केशान्तं चैव तत्समम् १५

द्विभागं नेत्रसूत्रान्तं पुटान्तं चैव तत्समम्
गुणांशं हनुसीमान्तं ग्रीवोच्चं तु गुणांगुलम्  १६
हिक्कासूत्रात्स्तनान्तं तु नवभागमुदाहृतम्
तस्मान्नाभ्यवसानं तु वस्वंगुलमुदाहृतम्  १७
नाभेस्तु मेढ्रमूलान्तं सप्तमात्रमिति स्मृतम्
भान्वंशमूरुदीर्घं स्यात् जानुद्व्यंगुलकं भवेत्  १८
जंघाचोरुसमायामा द्व्यंशं पादतलोन्नतम्
दशांशं तु तलायामं बाहुदीर्घं चतुर्दश  १९
प्रकोष्ठं तु दशांशं तु तलं वेदांगुलायतम्
गुणांशं मध्यमांगुल्यं सार्धद्व्यंशमनामिका  २०
तत्समं तर्जनीदीर्घं कनिष्ठायागुणांगुलम्
अंगुष्ठायाममग्न्यंशं युगांशं तलविस्तृतम्  २१
प्रकोष्ठाग्रं गुणांशं तु तन्मूलं चतुरंगुलम्
भूतांशं बाहुमूलस्य विस्तारं द्विजसत्तम  २२
सार्धाष्टांशं मुखव्यासं सप्तांशं कण्ठविस्तृतम्
कक्षयोरन्तरव्यासं त्रयोदशांगुलं भवेत्  २३
पञ्चांशं हृदयं तारं रुद्रांशं मध्यविस्तृतम्
श्रोणिस्थाने तु भान्वंशं कटिस्थाने त्रयोदश  २४
ऊरुमूलविशालं तु वस्वंगुलमुदाहृतम्
षडंशं जानुविस्तारं जंघामूलं युगांगुलम्  २५
गुणांशं नळकातारं षडंशं तलविस्तृतम्
पार्ष्णिव्यासं गुणांशं वा शेषं युक्त्या तु कल्पयेत्  २६
केशान्ते नासिकोपेतं करण्डमकुटान्वितम्
उभयोर्हस्तयोः पुष्पं वामो वरद एव वा  २७
कटकं वाथ तद्धस्तं सिंहकर्णमथापि वा

दक्षिणं पुष्पहस्तं वा कपित्थाम्रफलं तु वा २८
कटिसूत्रधृतं नग्नं छन्नवीरसमन्वितम्
मृदुकचमुपग्रीवं बालभूषणभूषितम् २९
आसीनं वा स्थितं वाथ नृत्तं वा स्कन्दमाचरेत्
आसीनौ चरणौ द्वौ तु विष्टरोपरिशाययेत् ३०
स्थिते पादतलौ द्वौ तु समभंगमिव स्थितौ
चरणौ कुञ्चिताभौ तु युक्त्या जान्वोश्च नीप्रकम् ३१
द्विपादौ कुञ्चितौ किञ्चित्किञ्चित् गमन एव वा
नृत्तं चेत्सुस्थितं सव्यपादं वक्रसमन्वितम् ३२
उद्धृतं वामपादं तु पीठोत्सेधं कलावधि
षण्मात्रं पञ्चमात्रं वा पादमुद्धारयेत् द्विज ३३
फलेन वरदं वामं हस्तमन्यं तु सूचिकम्
अथवा वामहस्तं तु फलं न्यस्य प्रसाधयेत् ३४
हिक्कासूत्रे समे धृत्वा कर्णबन्धोर्ध्वसीमकम्
द्व्यन्तरं लंबसूत्रं तु नृत्तमूर्तिवदाचरेत्
उमास्कन्दयुतं प्रोक्तं शृणु चन्द्रकलाधरम् ३५
इति काश्यपशिल्पे सोमास्कन्दमूर्तिलक्षणं नाम पञ्चषष्टितमः पटलः समाप्तः

अथ षट्षष्टितमः पटलः

चंद्रशेखरलक्षणम्

अथ वक्ष्ये विशेषेण चंद्रशेखरलक्षणम्
केवलं गौरी सहितमालिंगनमिति त्रिधा १
केवलं गौरी रहितं सहितं गौरी संयुतम्
आलिंग्य चैकहस्तेन देवीदेवौ परस्परम् २

कृतमालिंगमाख्यातमेवं त्रिविधमूह्यताम्
केवलं समपादं तु स्थानकं सहितं भवेत् ३
समभंगातिभंगं वा ह्यालिंगं चंद्रशेखरम्
केवलमूर्तिदं ख्यातं सहितं त्वभयप्रदम् ४
तेष्वादौ समपादं तु स्थानकं सहितं तथा
बिंबमानोदयं सर्वं प्रागेव परिकीर्तितम् ५
लंबमानोपमानं च ह्यधुना वक्ष्यते क्रमात्
प्रलंबफलकायामं चत्वारि चाष्टमात्रकम् ६
अष्टादशांगुलं तारं सार्धद्व्यांगुलं घनम्
चतुष्पादसमायुक्तं पादोच्चं प्रतिमोदयं ७
ऋक्षांगुलसमायुक्तं स्थापयेत्समभूतले
समसूत्रं विनिश्चित्य प्रलंबफलकोपरि ८
पूर्वोपरि च पार्श्वे च मानसूत्रं प्रलंबयेत्
अन्तरे सुषिरं कल्प्यं सूत्रान्त्यं लंबयेत्ततः ९
तत्सूत्रं तु गुणं बिंबं कारयेत् द्विजसत्तम
पूर्वे च पातयेत्पृष्ठे कायमध्ये च लंबयेत् १०
एतानि पञ्चसूत्राणि ब्रह्मसूत्रमुदाहृतम्
कक्षान्तरे मुखान्ते च द्वे द्वे सूत्रे प्रलंबयेत् ११
एवं हि नवसूत्राढ्यं स्थानकं चासनं तथा
मुकुटे मध्यमे चैव ललाटस्य तु मध्यमे १२
नासाग्रमध्यमे चैव हनोर्मध्ये तथैव च
हिक्कामध्ये च हृदयमध्ये नाभेश्च मध्यमे १३
लिंगमध्ये च मध्ये तु पादयोश्च तलान्तरे
लंबयेत्पूर्वसूत्रं स्यादपरस्थमथोच्यते १४
मुकुटमध्यमाद्विप्र कृकाट्याश्चैव मध्यमे

ककुन्मध्याद्विशन् मध्यात् स्फिक्पिराडान्तरके तथा १५
ऊरुजानुजंघयोश्च पाष्र्णयोश्चाभ्यन्तरे तथा
एवं स्याल्लंबयेत् सूत्रमपरं सूत्रमेव हि १६
पार्श्वयोः कर्णबाह्ये च ग्रीवामध्ये तथैव च
बाह्वोश्च मध्यमालंब्य गुल्फमध्ये तु लंबयेत् १७
देहमध्यगतेनैव पञ्चसूत्रं प्रकल्पयेत्
श्रोत्राभ्यन्तर्गतं सूत्रं स्तनचूचुकमध्यमे १८
पादोरुमध्य देशेन्त्ये मध्यमे तु प्रलंबयेत्
पूर्वसूत्रं तु मौळ्यग्रं निम्नं द्वादशमात्रकम् १९
पूर्वसूत्रात्तु मौळ्यग्रमध्यं षरामात्रमुच्यते
पूर्वसूत्रात् ललाटान्तमन्तरं द्व्यंगुलं भवेत् २०
अपरसूत्रं शिरःपृष्ठं पादोनं तु युगांगुलम्
पूर्वसूत्रात्तु हन्वन्तं सयवं द्व्यंशमिष्यते २१
कृकाट्याः परसूत्रं तु यवोनं द्व्यन्तरान्तरे
पूर्वसूत्रात्तु हिक्कान्तमन्तरं तु रसांगुलम् २२
ककुदः पृष्ठसूत्रं तु षोडशं तु यवान्तरम्
उरसः पूर्वसूत्रं तु द्व्यन्तरं तु द्विमात्रकम् २३
ककुन्मध्यात्परं सूत्रं द्व्यन्तरं वसुमात्रकम्
मध्योदरं न्यसेत्पूर्वसूत्रं वै तत्समं परे २४
वंशनिम्नात्परं सूत्रं पादोनाष्टार्धकं परं
प्राक्सूत्रान्नाभिसूत्रान्तमन्तरं सार्धमात्रकम् २५
नाभिसूत्रसमे पृष्ठे सार्धपञ्चांगुलं भवेत्
प्राक्सूत्रान्मेढ्रमूलान्तं गुणांगुलमुदाहृतम् २६
तत्समे त्वपरे सूत्रादंतरं तु द्विमात्रकम्
ऊरुमध्ये तु पुरतो जानुमध्ये तथैव च २७

जंघा मध्ये च नळका मध्ये चैव पुरोगतम्
तिर्यक्सूत्रं तु संकल्प्य द्व्यन्तरं तु प्रमीयते २८
तत्तत्स्थाने परे चैव तिर्यक्सूत्रं प्रकल्पयेत्
ऊरुमध्यांगसूत्रात्तु पूर्वसूत्रात्तु द्व्यंगुलम् २९
तत्रैवापरसूत्रं तु षड्विंशति यवं भवेत्
जानुमध्यांगसूत्रांतं पूर्वसूत्राद्रसांगुलम् ३०
तत्रैवापरसूत्रं तु पादोनं पञ्चमात्रकम्
जंघामध्यं तु प्राक्सूत्रात् वस्वंगुलमुदाहृतम् ३१
तत्रैव परसूत्रांतं षड्विंशतियवं भवेत्
प्राक्सूत्रान्नळकामध्यं सार्धं वस्वंगुलं भवेत् ३२
नळकापरसूत्रांतं पादोनं पञ्चमात्रकम्
द्व्यर्धमंगुष्ठयोरग्रं पूर्वसूत्राद्विशेषतः ३३
तत्सूत्रात्पार्ष्णिपर्यंतं सार्धमन्वंशमिष्यते
प्राक्सूत्रात्कायमध्यस्थं सूत्रं सार्धनवांगुलम् ३४
तत्कायमध्यसूत्रात्तु शिरः पृष्ठं युगांशकम्
तत्कायमध्यसूत्रात्तु ककुत्पञ्चांगुलार्धकम् ३५
उरोमध्यप्रदेशे तु पृष्ठं सार्धषडंगुलम्
सूत्रमध्योदरे पृष्ठे सार्धवेदांगुलं भवेत् ३६
नाभिप्रदेशे पृष्ठे तु सार्धभूतांगुलं भवेत्
कटिनीप्रं षडंशं स्यात्सार्धाष्टांशं स्फिगग्रकम् ३७
ऊरुमध्यपरं वेदो जानुपृष्ठं तथैव च
जंघामध्ये गुणांशं तु नळका द्व्यंगुलं भवेत् ३८
गुल्फयोर्हि युगांगुल्यं परसूत्रे बहिर्घनम्
पार्श्वसूत्रौ च मध्यस्थसमसूत्रे तु संस्थितौ ३९
पार्श्वसूत्रात्पुरो बाहु पर्यंतं चतुरंगुलम्

तत्सूत्रादपरे बाहु पर्यंतं वसुमात्रकम् ४०
पूर्वापरकरौ मध्ये कूर्परांतं तु लग्नकौ
तत्करौ बाह्यविवृतौ चतुरंगुलमिष्यते ४१
कर्तरीपरहस्ताग्रौ हिक्कासूत्रसमं भवेत्
मध्यांगुल्यग्रमुभयोः स्तनचूचुकसमं भवेत् ४२
अभयं दक्षिणं हस्तं वरदं वामहस्तकम्
प्राक्सूत्रादभये हस्ते मध्यं पञ्चदशांगुलम् ४३
वरदं वामहस्तं तु अधोमुखं प्रकल्पयेत्
तलमूलं कटिं स्पृष्ट्वा मेढ्राग्रं तत्कराग्रकम् ४४
मध्यांगुल्यग्रमालंब्य ऊरुनीप्रं युगांगुलम्
ऊर्ध्ववक्त्रं तु वरदं पृष्ठं नाभिसमोद्धृतम् ४५
वरदं हस्ततलमध्ये पूर्वसूत्रं तलांगुलम्
कर्तरीमणिबन्धं तु बाहुबाह्यं मुखं भवेत् ४६
अथवा रुद्रभागं तु दशांगुलमथापि वा
कूर्परात्पूर्वसूत्रांतं नीप्रं सप्तदशांगुलम् ४७
अष्टादशांगुलं वाथ एकोनविंश एव वा
जंघयोरेकोनविंशमूरुमूलं द्वयोन्नतं ४८
गुल्फयोरन्तरं चैव एकांगुलमुदाहृतम्
ऊरोर्मध्यान्तरंगुल्यं विंशाद्यं वा उदाहृतम् ४९
जान्वंतरं चतुर्मात्रं जंघयोः पञ्चमात्रकम्
नळकांतं रसांशं तु वेदांशं गुल्फयोर्भवेत् ५०
पादांगुष्ठद्वयोरंतं द्वयंतरं वसुमात्रकम्
आर्जवं राजसं भावं कल्पयेद्वा द्विजोत्तम ५१
कर्तरी परहस्तौ द्वौ टंकं वै दक्षिणे करे
हरिणी वामहस्ते तु टंकं कृत्वा बहिर्मुखम् ५२

हरिणी बाह्यमूलं वा द्व्यंतराननमेव च
जटामकुटसंयुक्तं दक्षिणे चन्द्रशेखरम् ५३
वामेन्दुशेखरं वाथ प्रवाळसदृशप्रभम्
त्रिणेत्रं सौम्यवदनं सर्वाभरणभूषितम् ५४
पीतांबरधरं देवं वस्त्राग्रं नळकांतकम्
उभयोः पार्श्वयोरेवमंबरं चोरुमध्यमम् ५५
केवलं चैवमाख्यातं वामे गौरी समायुतम्
भिन्नपीठैकपीठं वा भवेद्वाभंगसंयुतम् ५६
तद्गौरी संयुतं चोरुभिन्नपीठैकमेव वा
तदेव भंगसंयुक्तं देवदेव्यौ परस्परम् ५७
देवो वरदहस्तेन देवीं वै त्वपराश्रिताम्
स्थानमध्यांतरे वामपार्श्वमालिंगनं कुरु ५८
पार्श्वसूत्रात्परो वाथ बाहुमालिंगनं तु वा
देवी दक्षिणहस्तेन शंभोर्दक्षिणपार्श्वतः ५९
कटिसूत्रोपरिष्टात्तु पुष्पं वामकरे धृतः
अथवा पार्श्वदेवेशो व्योम्नस्तु दक्षिणे करे ६०
करोत्पलं वहन्त्याश्च वामहस्तं प्रलंबयेत्
एवमालिंगमूर्तिश्च त्रिधा मानेन कल्पयेत् ६१
सर्वाभरणसंयुक्तं प्रभामण्डलसंयुतम्
चन्द्रशेखरमाख्यातं वृषारूढमथ शृणु ६२

इति काश्यपशिल्पे चन्द्रशेखरमूर्ति लक्षणकथनं नाम षट्षष्टितमः पटलः समाप्तः

## अथ सप्तषष्टितमः पटलः

## वृषवाहनमूर्ति लक्षणम्

वृषवाहनमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना
समभंगं त्रिभंगं वा कल्पयेत्कल्पवित्तमः १
दक्षिणं सुस्थितं वामं वामपादं तु कुंचितम्
उष्णीषान्मध्यमाद्वामे ललाटं मध्यवामके २
वामनेत्रावसाने तु वामनासापुटांतके
दक्षिणे स्तनपीठं स्यात् वामनाभिश्च मध्यमे ३
वामोरुमध्यपार्ष्ण्योश्च मध्यसूत्रं प्रलंबयेत्
एवं तु समभंगं स्यात् नतमानं युगांगुलम् ४
मुखे पूर्ववदुद्दिष्टं दक्षिणे तु स्तने तथा
नाभेर्वामे गुणांशं तु वामोरुमध्यमे तथा ५
सुस्थितांघ्रेस्तु गुल्फस्य मध्ये सूत्रं प्रलंबयेत्
अतिभंगमिति ख्यातं नतं पंचांगुलं भवेत् ६
वृषस्य मस्तकोर्ध्वे तु न्यस्तं स्याद्वामकूर्परम्
हिक्कासूत्रं तथाविप्र कलांशं वा नवांगुलम् ७
लंबं वामकूर्परं स्यात्तस्मादासनसीमकम्
वृषभस्योच्छ्रयं ख्यातं पादस्थानाहितांगुलम् ८
वृषभोदयमाख्यातं वृषं लक्षणवत्कुरु
वृषमूर्ध्नि तु हस्ते तु मध्यांगुल्यग्रसीमकम् ९
नाभिसूत्रसमं कुर्यात् अंगुलं वा नतांगुलं
अधस्तात्तलमध्ये तु पूर्वसूत्रं यवद्वयम् १०
अधोमुखं प्रकर्तव्यं तदर्धं तु प्रसारयेत्
दक्षिणे पूर्वहस्ते तु पार्ष्णिनाभेरधो बुधः ११
पक्षे षोडशमात्रं वा नतं तत्सिंहकर्णवत्
वक्त्रदण्डोत्थितं तस्मिन् कल्पयेत्तु चलाचलम् १२
स्थितांघ्रिजानुरूर्ध्वासु हिक्कासूत्रं समुन्नतम्

कनिष्ठांगुलिपरीणाहमग्रं वक्त्रत्रयान्वितम् १३
लोहजं दारुजं वाथ वक्रदराडैवमाचरेत्
अधस्तान्मणिबन्धस्तु ऊरुमूलं तदुत्तरम् १४
पञ्चषट्सप्तमात्रं वा वसुनन्दांगुलं तु वा
एकहस्तद्वयं चैव हिक्कासीमान्तमुन्नतम् १५
टंकं दक्षिणहस्ते तु वामहस्ते मृगं भवेत्
परहस्तद्वयाग्रं च हिक्कासूत्रसमं भवेत् १६
एकद्वित्रिचतुःपञ्च मात्रमुन्नतमेव वा
जटामकुटसंयुक्तं जटाभारस्तु लंबितः १७
जयबन्धशिरो वापि कर्तुरिच्छावशान्नयेत्
सर्वाभरणसंयुक्तं रक्ताभं रक्तवाससम् १८
वामपार्श्वे उमादेवी दक्षिणे वा विशेषतः
स्वस्तिकं दक्षिणं वामं वामपादं तु कुञ्चितम् १९
उत्पलं दक्षिणे हस्ते वामहस्तं प्रसारितम्
स्त्रीमानोक्तविधानेन उमादेवीं च कारयेत् २०
वृषवाहनमाख्यातं नृत्तमूर्तिरथोपरि २१

इति काश्यपशिल्पे वृषवाहनमूर्तिलक्षणं नाम
सप्तषष्टितमः पटलः समाप्तः

## अथाष्टषष्टितमः पटलः

## नृत्तमूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण नृत्तमूर्तेस्तु लक्षणम्
उत्साहवर्धनार्थाय उद्धृता चर्ममुण्डिका १
रुरुराडा वदनं कृत्वा स्पिक्यात्वणनितं तथा
हिंसोत्सुकासना देवी तत्सुखासनवृद्धये २

अथानृत्तं करिष्यति सर्वलोकहिताय वै
देवानां मूर्तिनाथाय राजराष्ट्रविवर्धनात् ३
नृत्तमष्टादशं ह्येव तेष्वादौ नवमुच्यते
प्रकृतौ विधिना ग्राह्यं बिंबमानं द्विजोत्तम ४
उत्तमदशतालेन सर्वांगं परिकल्पयेत्
भानुरुद्रदशं चैव कुंभं नृत्तोन्नतं भवेत् ५
उष्णीषमध्यमात्सव्ये ललाटमध्यदक्षिणे
नीत्वा शिवांगुलं सव्ये नेत्रान्ते च पुटान्तके ६
हनोः सर्वं तु हिक्काया मध्ये नाभेश्च मध्यमे
वामोर्वभ्यन्तरे लंब्य स्थितांघ्रिगुल्फमध्यमे ७
प्रभामण्डलमध्ये तु पूर्वसूत्रं तु लंबयेत्
ललाटसूत्रनीप्रं तु युगार्धांगुलमन्तरं ८
गुल्फसूत्रान्तरे चैव द्वादशांशं विधीयते
हिक्कामध्यं तु सूत्रात्तु सार्धसप्तनवांगुलम् ९
मकुटोव्यकपक्षाग्रं सूत्रान्तरं तथैव च
ऊर्ध्वकुक्षिं स्पृशेत्पूर्वं सूत्रमेवं प्रलंबयेत् १०
तत्सूत्रात् डोलबाह्वग्रमर्धाधिककलांगुलम्
तस्मादपरबाह्वग्रं युगांगुलमुदाहृतम् ११
तस्मादग्निकराग्रान्तं साष्टत्रिंशांगुलं तु वा
चत्वारिंशति मात्रं वा तस्मादधिगुणांगुलम् १२
हिक्कासूत्रं समोद्धृत्य मध्यमे मध्यमाग्रकम्
तद्धस्ततलमध्ये वा मध्यांगुल्यग्रपूर्वके १३
मध्यपर्वे यवाधिक्यं त्वनलं पात्रसंयुतम्
पात्रं विनाथवाधिक्यं पञ्चांगुलं विशालकम् १४
कुंभं सप्तांगुलं वाष्टनवमात्रमथापि वा

त्रिपञ्चसप्तजिह्वा वा कल्पयेत्तु यथोचितम् १५
उक्तासु मध्यजिह्वायां कुर्यात् वह्निं तु दक्षिणम्
दक्षिणे पूर्वसूत्रात्तु बाह्वग्रं विशदं कुरु १६
तस्माड्डमरुके हस्ते मणिबन्धस्य बाह्यकम्
अष्टाविंशतिमात्रं वा त्रिंशदंगुलमेव वा १७
चत्वारिंशति मात्रं वा वामसंख्या क्रमान्नयेत्
तद्धस्तमणिबन्धोर्ध्वं हिक्कासूत्रसमं भवेत् १८
डमरुमध्यमं पीडय सूचीकर्णान्तमुद्धृतम्
तर्जन्यग्रं तु सूची स्यात् तर्जनी रजनी भवेत् १९
अथवा चर्मसूत्रं तु पिण्डीमध्यांगुलोपरि
तनामिकोपरिष्टात्तु डमरुं परिकल्पयेत् २०
डमरोर्दीर्घविस्तारं वसुपञ्चांगुलं क्रमात्
मध्यं गुणांगुलव्यासं पद्माकारं प्रकल्पयेत् २१
वलयद्वयसंयुक्तं चर्मसूत्रेण बन्धितम्
गव्येन कृतबिंबं तं तत् द्रव्येण तु कारयेत् २२
सूच्यग्रात्कर्णसीमान्तं चत्वारिंशति मात्रकम्
सपञ्चचत्वारिंशद्वा पञ्चाशन्मात्रकं तु वा २३
पार्श्वसूत्रसमं सूची वन्यास्तौ मध्यमांगुलम्
दक्षिणे पूर्वहस्तं तु अभयं परिकल्पयेत् २४
प्राक्सूत्रादभयहस्तमध्यं भानुद्वयांगुलम्
तन्मध्यमांगुलान्तं तु हिक्कासूत्रसमं भवेत् २५
सूत्रात्तत्कूर्परं नीप्रं चत्वारिंशत् द्विमात्रकम्
अभयप्रकोष्ठमध्ये भुजंगवलयं न्यसेत् २६
प्रकोष्ठमध्यनाहं स्यात् सपादं तस्य दैर्घ्यकम्
तत्सूत्रादुपरिख्यातं फणां भान्वंगुलं भवेत् २७

सप्तांगुलं विशालं तु घनमेकांगुलं भवेत्
पुरःस्थितान् समीद्योत्तु जिह्वा नीप्रं समन्वितम् २८
भुजंगवलयं ह्येवं कल्पयेत्कल्पवित्तमः
सूत्रात्कद्यान्तरं सव्ये पार्श्वे द्वादश मात्रकम् २९
सूत्रान्मध्योदरं वामे नवांगुलमुदाहृतम्
नवमात्पिराडसूत्रं तु सूत्रादष्टादशांगुलम् ३०
सूत्रात्कुञ्चितजानोस्तु अन्तरं तु दशांगुलम्
नवांगुलं चाष्टमात्रं जानुनीप्रं यथाक्रमम् ३१
भानुरुद्रदशांगुल्यं नतमानं तु कल्पयेत्
स्थितांघ्रिजानोर्वामांघ्रि जानुनीप्रं यथाक्रमम् ३२
त्रिपञ्चमनुमात्रं वा जान्वोरभ्यन्तरं त्रिधा
स्थितांघ्रिनळका मध्यात् वामपाष्र्यन्तरं बुध ३३
सवेदचत्वारिंशच्च सांगुलं प्रविधीयते
सप्ताष्टषड्पञ्चचत्वारिंशांशं तु नतं भवेत् ३४
स्थितजानूद्धृतं पार्ष्णेश्चतुस्त्रिंशतिमात्रकम्
त्रयस्त्रिंशति मात्रं वा जानुपाष्र्यन्तरं द्विज ३५
उद्धृतांघ्रेस्तु जानूर्ध्वं नाभिसूत्रसमं भवेत्
कूर्परं डोलहस्तं स्यात् नाळसूत्रं दशांगुलम् ३६
एकादशांगुलं वाथ कल्प्यं वा कूर्परान्तकम्
तद्धस्तमणिबन्धात्तु वामजान्वन्तमन्तरम् ३७
दशांगुलं वा कर्तव्यं नवांगुलमुदाहृतं
डोलहस्तं विनिर्मुक्तमंगुलाग्रं विशेषतः ३८
वामपादे तु जंघादि द्व्यन्तरं त्वंगुलं भवेत्
नवांगुलान्तरं वापि रुद्रांगुलमथापि वा ३९
डोलहस्तादभयान्तमन्तरं तु दशांगुलम्

अन्यान्यनुक्तनीप्राणि यथा सौन्दर्यमाचरेत् ४०
केशान्ताद्बकपत्तं स्यात्तुंगमष्टादशांगुलम्
सप्तदशांगुलं वाथ षोडशांगुलमेव वा ४१
तदर्धं वा त्रिपादं वा तस्य विस्तारमेव हि
सुविकीर्णजटाभारं पञ्चषट्सप्तनन्दकं ४२
रुद्रसंख्या तु वा विप्र उभयोः पार्श्वयोस्तथा
द्वात्रिंशांगुलमारभ्य चैकषष्ट्यंगुलान्तकम् ४३
अंगुलांगुलवृद्ध्या तु जटादीर्घमुदाहृतम्
अधोजटादीर्घमेवं तस्मादूर्ध्वं तु मूर्धके ४४
कनिष्ठांगुलिपरीणाभं जटानाहमुदाहृतम्
जटान्तं पुष्पमालाभिरलंकृत्य विशेषतः ४५
नाभं चैवार्कपुष्पं च धुत्तूरकुसुमं तथा
हस्तिशिरीषकं चैव करोटीरत्नबन्धनम् ४६
भूषयित्वा तु मुकुटे दक्षिणे चंद्रशेखरम्
सिन्दूरालंकृतो रत्नहारमालाविलंबितम् ४७
भस्मोद्धूलितसर्वांगं किञ्चित्प्रहसिताननम्
यज्ञोपवीतसंयुक्तं हारसूत्रसमन्वितम् ४८
देवांगनोरुदेमध्ये बाहुधामेऽग्रमिर्गतिः
प्रभामण्डलमाश्रित्योदरबन्धाग्रको द्विज ४९
व्याघ्रचर्मांबरोपेत ऊर्ध्वं गतिवसानकम्
डोलबाह्वोर्धृतो बन्धं व्याघ्रचर्मद्विजोत्तम ५०
लंबनं बाहुमूले तु भानुत्रयोदशांगुलम्
तदर्धं वा त्रिपादं वा विस्तारं चक्रमण्डलम् ५१
पादौ नूपुरसंयुक्तौ सर्वाभरणभूषितौ
हस्तपादांगुल्यस्सर्वाः रत्नहेमांगुलीयकाः ५२

मध्यांगुलिविरहिताश्शेषाः मुद्रिकयान्विताः
दक्षिणं कुञ्चितं वाममपस्मारोपरिस्थितम् ५३
तिर्यक् पादतलं न्यस्य नृत्तं कुर्यान्महेश्वरः
वामपादं ततोद्धृत्य सतिर्यक् दक्षिणान्वितम् ५४
डोलसस्तमथात्यन्तमपस्मारमिहोच्यते
त्रिचतुःपञ्चमात्रं वा अपस्मारस्य दैर्घ्यकम् ५५
उष्णीषं चैकभागेन केशान्तं च तथा भवेत्
वस्वंशं तु मुखायामं गळमर्धांगुलं भवेत् ५६
अध्यर्धांगुलविस्तारं कण्ठस्य तु विशेषतः
हिक्कायाहृदयान्तं तु नवांगुलमुदाहृतम् ५७
हृदयान्नाभिपर्यन्तं तत्समं परिकीर्तितम्
नाभेस्तु मेढ्रमूलांतं मानं षण्मात्रकं भवेत् ५८
सप्तांगुलं चोरुदीर्घं जानुदीर्घं द्वयांगुलम्
जंघादीर्घमूरुतुल्यं द्वयांशं चरणोदयम् ५९
मन्वंशं तु करं हिक्कामध्यमांगुलिसीमकम्
शेषं युक्त्या प्रकर्तव्यं शाययेत्तु अधोमुखम् ६०
शंभोस्सव्ये शिरःस्थाप्य वामे पादौ विधूनितौ
अपस्मारस्योदयं तु धर्मनन्दाष्टमात्रकम् ६१
तन्मुखं तु समुद्धृत्य व्याळलीलासमन्वितम्
व्याळं वै वामहस्तेन दक्षिणे तस्य चेन्द्रियं ६२
सस्य श्यामनिभाकारमपस्मारं द्विजोत्तम
कलांशं पद्मपीठोच्चं विस्तारं च चतुर्गुणम् ६३
सपादं सार्धपादोनं द्विगुणं वा तदायतम्
ऊर्ध्वपद्ममधःपद्मं पिण्डिका चोक्तवत् भवेत् ६४
प्रभामण्डलसंयुक्तमनेन विधिना कुरु

गुणांगुलं समारभ्य शतमात्रावसानकम् ६५
तावदेवांगुलाख्या तु कालकोनशतोदयम्
एकांगुलं समारभ्यैकैकावयववर्धनं ६६
पश्चात्सख्यासनं ख्याते दण्डः स्यात्प्रथमस्य तु
तत्तदष्टांशहीनं तु ऊर्ध्वोर्ध्वं तु क्रमात्कृशम् ६७
एकद्वित्रिचतुःपञ्चषट्सप्तवसुमात्रकम्
पुनःपुनस्तथासंख्यमुपकुर्यात्प्रकल्पयेत् ६८
कर्तुरिच्छावशात्तेषु दण्डसंख्यं तु तत्कुरु
नानादललताभिश्च नानापुष्पैश्च शोभितम् ६९
तस्योपरिष्टादनलं हस्तं वै शिखरं बुधः
कर्तव्यं परितो विप्र तालस्याभ्यन्तरान्वितम् ७०
भानुमण्डलं वा धीमन् प्रभामण्डलवर्तनम्
तस्य वामे उमादेवीं प्रागुक्तविधिना कुरु ७१
एतत्स्यात्प्रथमं नृत्तं सर्वलोकहितावहम्
तदेव दक्षिणे पार्श्वे जटाग्रे च विभाजिते ७२
शंभोर्देहांतरं चैव षोडशांगुलसळितम्
स्त्रीमानोक्तांगसंयुक्तं हृदयेञ्जलिसंयुतम् ७३
एवं जाह्नविसंयुक्तं नृत्तं यत्तत् द्वितीयकम्
तदेव वामपादं तु अपस्मारोपरिस्थितम् ७४
उद्धृतं दक्षिणं पादं वामपादोपरिस्थितम्
ललाटमध्यवामे तु वामनासापुटान्तके ७५
लंबयेत् ब्रह्मसूत्रं तु स्थितपादस्य गुल्फके
शेषं प्रागिव कर्तव्यं एतन्नृत्तं तृतीयकम् ७६
अवकीर्णजटाभारं जटामकुटसंयुतम्
जटामकुटसंयुक्तं शेषं प्रथमनृत्तवत् ७७

चतुर्थं नृत्तमेतद्धि सर्वप्राणिहितावहम्
कर्णान्तमुद्धृतं सव्यपादं वामं तु कुंचितम् ७८
भुजाष्टकसमायुक्तमेतत्पंचममुच्यते
अभयं शूलं पाशं च डमरुं दक्षिणे करे ७९
कपालमग्निं पाशं च घण्टां वामे करे तथा
गजहस्तोपमं हस्तं प्रसार्यदक्षिणानुगम् ८०
यद्वत्प्रथमनृत्तस्य पूर्वसूत्रं प्रसारयेत्
चिह्नं पञ्चमनृत्तस्य एवमेवेति विद्यते ८१
दोर्भिः षोडशभिर्युक्तं वामे गौरी समायुतम्
हस्ताभ्यामुद्धृतं स्कन्धं स्तनं तस्य प्रसारितम् ८२
अभयं शूलं पाशं च खड्गं डमरुकं ध्वजम्
वेताळं सूचिहस्तं च दक्षमष्टकरं भवेत् ८३
अनलं गजहस्ताभं खेटकं विस्मयं तथा
घण्टां चैव कपालं च छुरिकां सूचिमेव च ८४
वाममष्टभुजं ख्यातं शेषं पञ्चमनृत्तवत्
एवं षष्ठं समाख्यातं राजराष्ट्रसुखावहम् ८५
त्रिणेत्रमष्टहस्तं च सुविकीर्णजटाधरम्
कुंचितं वामपादं तु अपस्मारोपरिस्थितम् ८६
वामपार्श्वे शिरस्तस्य विकीर्णांघ्रिश्च दक्षिणे
सुस्थितं दक्षिणं पादमंगुष्ठाग्रं च भीमकम् ८७
पूर्वसूत्रात्तदंगुष्ठनीप्रं भान्वंगुलं भवेत्
अभयं शूलं पाशं च डमरुं दक्षिणे करे ८८
कपालमग्निपात्रं च तथा विस्मयहस्तकम्
गजहस्तोपमं वामे चतुर्थे चैवमेव हि ८९
गजहस्तोपमं सव्यं वामं व्याळसमं तु वा

ललाटस्य तु मध्ये तु वामे तु स्थानमध्यमे ९०
वामांघ्रिनळकामध्ये लंबयेत् ब्रह्मसूत्रकम्
तत्सूत्रात् वामजान्वन्तं नीप्रं चैव नवांगुलम् ९१
नतमानं दशांशं स्यात् वामे गौरी समायुतम्
सप्तमं नृत्तमाख्यातं जगद्दुःखविनाशकम् ९२
तदेव षड् भुजोपेतमभयं डमरुं तथा
शूलं दक्षिणपार्श्वे तु कपालं विस्मयं तथा ९३
गजहस्तोपमं वामे सूत्रं प्राग्वत्तदष्टमम्
चतुर्भुजं त्रिणेत्रं च जटामकुटमण्डनम् ९४
अभयं डमरुं सव्ये वामेऽग्निर्गजहस्तवत्
अपस्मारं विना पीठे वामांघ्रिकुंचितं स्थितम् ९५
तत्तत्पुरस्थितं पीठे सव्यपादकनिष्ठिकम्
तत्पादं कुंचितं युक्त्या सूत्रं युक्त्या तु लंबयेत् ९६
नवमं नृत्तमाख्यातं गंगाधरमतः परम् ९७

इति काश्यपशिल्पे नृत्तमूर्तिलक्षणकथनं नामाष्टषष्टितमः पटलः समाप्तः

## अथैकोनसप्ततितमः पटलः

### गङ्गाधरमूर्तिलक्षणम्

गंगाधरमहं वक्ष्ये संक्षेपादधुना शृणु
सुस्थितं दक्षिणं पादं वामपादं तु कुंचितम् १
ललाटमध्यमात्सव्ये नीत्वा नवयवान्तकम्
दक्षिणे चाक्षिसीमान्ते सव्यनासापुटान्तरे २
हिक्कामध्ये च नाभेस्तु सव्ये द्व्यंगुलकं भवेत्
दक्षिणे मेढ्रमूलस्य मध्ये वेदांगुलान्तरे ३

पाष्र्योश्च मध्यमे चैव हिक्कासूत्रं प्रलंबयेत्
गुणांशं नतमानं तु पादांगुष्ठद्वयान्तरम् ४
अष्टादशांगुलं प्रोक्तं तत्र्यंशं पार्ष्णिकान्तरम्
वसिष्ठस्य जटाबन्धं वामे त्वीषन्नताननम् ५
दक्षिणे पूर्वहस्तं तु कुरुदेवीस्तनाश्रितम्
वामेन पूर्वहस्तेन देवीमालिंगनं कुरु ६
दक्षिणे परहस्ते तु जटाजाह्नविसंयुतम्
उष्णीषान्तं समुद्धृत्य वामे कृष्णायुगं ध्रुवम् ७
देवस्य वामपार्श्वे तु देवीवहितकाननम्
स्वस्तिकं वामपादं तु दक्षिणं कुञ्चितं भवेत् ८
समजंगनतं सूत्रं कल्पयेत्कल्पवित्तमः
प्रसार्य दक्षिणं हस्तं वामहस्तं तु पुष्पकम् ९
अथवा दक्षिणे हस्ते प्रकोष्ठस्य त्रिवर्गकम्
श्रोणिहस्ततलं लंब्य स्वप्नस्थितमिव क्रमात् १०
सर्वाहंकारसंयुक्तं सर्वालंकारसंयुतम्
भागीरथी दक्षपार्श्वे मुनिभिः संस्तुतो हरः ११
गंगाधरं हरमिति ततो वै त्रिपुरान्तकम् १२

इति काश्यपशिल्पे गंगाधरमूर्तिलक्षणं नाम एकोनसप्ततितमः पटलः समाप्तः

## अथ सप्ततितमः पटलः

## त्रिपुरान्तकमूर्तिलक्षणम्

त्रिपुरान्तकमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना
त्रिचतुःपञ्चमात्रं वा नतमानं यथाक्रमम् १
आभंगं समभंगं चाप्यतिभंगमिति त्रिधा

प्रतिमोच्च नतं भागं मानमेवं हि कल्पयेत्  २
पादांगुष्ठद्वयोश्चैव द्व्यन्तरं षोडशांगुलम्
आभंगं तद्विजानीयात् अष्टादशांगुलं समम्  ३
विंशत्यंगुलमाख्यातमतिभंगमिति स्मृतम्
तत्त्रिभागैकभागं तु पाष्ण्योस्तु द्व्यन्तरं भवेत्  ४
उष्णीषात् वामपार्श्वे तु नेत्रांते तत्पुटांतके
हनोर्वामे समालंब्य दक्षिणस्तनयामके  ५
नाभेर्दक्षिणपार्श्वे तु वामोरुसमपार्श्वके
दक्षिणांघ्रेस्तु पार्ष्णोस्तु वामपार्श्वे तु लंबयेत्  ६
आभंगं सूत्रमाख्यातं समभंगमथ शृणु
ललाटमध्ये नासाग्रे पादयोः पार्ष्णिमध्यमे  ७
लंबयेत्पूर्वसूत्रं तु द्व्यन्तरं तु वदाम्यहम्
तत्सूत्रात् वामपार्श्वे तु हिक्कासूत्रं शिवांगुलम्  ८
अर्धांगुलं तु तत्सूत्रात् वामे हृदयमध्यमम्
तत्सूत्राद्दक्षिणे नाभिमध्यमं तु द्व्यांगुलम्  ९
तत्सूत्राद्दक्षिणे मेढ्रमूलमध्यं युगांगुलम्
तत्सूत्राद्वावतो जानोरन्तरं द्वादशं यवम्  १०
समभंगमिति ख्यातमतिभंगमथो शृणु
उष्णीषात् वामपार्श्वे तु नेत्रान्ते च पुटान्तके  ११
दक्षिणे स्तनमध्यान्तं तत्सूत्रं तु गुणांगुलम्
नाभिमध्ये तु वामे तु सूत्रनीप्रं गुणांगुलम्  १२
तत्सूत्रं वामजान्वन्तमर्धमात्रं विधीयते
वामांघ्रिपार्ष्णिसव्ये तु पार्श्वसूत्रं प्रलंबयेत्  १३
स्पर्शनं वेशनं नीप्रं सपादं स्थानकोक्तवत्
एवं त्रिभंगसूत्रेषु संमिश्रं तु न कारयेत्  १४

उत्तमं चातिभंगं स्यात्समभंगं तु मध्यमम्
आभंगमधमं ख्यातं त्रिपुरान्तकमूर्तिकम् १५
दक्षिणं स्वस्तिकं पादं वामपादं तु कुञ्चितम्
दक्षिणे पूर्वहस्तं तु नाभिसूत्रसमं मतम् १६
सिंहकर्णं तु तद्धस्तं बाणमध्यं तु पीडितम्
बाणायामं तु तत्सप्तत्र्यंगुलं तु विधीयते १७
कनिष्ठांगुलिपरीणाहं देवेशस्य करे तु तत्
आस्यं पञ्चांगुलव्यासमास्योच्चं व्यासतस्समम् १८
आस्य तुंगसमं पुच्छं विस्तारे त्रियवं भवेत्
वामहस्ते धनुर्धृत्वा कक्षान्तन्तत्करोर्ध्वकम् १९
एकद्वित्र्यंगुलं वापि तस्माद्धृत्यानतं तु वा
शतांगुलं तु तुंगं वा पञ्चसप्तनवांगुलम् २०
हीनं वाप्यधिकं वापि नवधाधनुषान्वितम्
पूर्णमुष्टिस्तु नाहं स्यात् मध्यमाग्रौ कृशौ कुरु २१
अग्रं मध्यांगुलं व्यासं वृत्तवर्णं विचित्रितम्
बाणनाहत्रिभागैकं रज्जुनाहं तु तन्तुना २२
धनुर्दीर्घाष्टभागे तु सप्तांशं रज्जुदीर्घकम्
तद्दीर्घस्यानुकूलं तु धनुर्वक्रमुदाहृतम् २३
त्रिवक्रसहितं वाथ बालचंद्राभमेव वा
धनुराकृतिरेवं स्यात् लोहजं दारुजं तु वा २४
कर्तरीपरहस्तौ द्वौ टंककृष्णमृगान्वितौ
टंकं दक्षिणहस्ते तु वामहस्ते मृगो धृतः २५
जटामकुटसंयुक्तं सर्वाभरणभूषितम्
प्रवाळसदृशप्रख्यं वामे गौरी समायुतम् २६
त्रिपुरान्तकमूर्तेस्तु प्रथमं लक्षणं त्विदम्

देवस्य वामपादं तु अपस्मारोपरिस्थितम् २७
शेषं प्रागिव कर्तव्यं द्वितीयं लक्षणं भवेत्
सुस्थितं वामपादं तु दक्षिणं कुंचितं भवेत् २८
शेषं प्रागिव कर्तव्यं सूत्रादितरपार्श्वकम्
तृतीयं लक्षणं प्रोक्तं चतुर्थं लक्षणं शृणु २९
तदेव वामपादं तु अपस्मारोपरिस्थितम्
शेषं प्रागिव कर्तव्यं चतुर्थं लक्षणं हि तत् ३०
कटौ बाणधरे हस्ते मध्यरेखा कलांगुलम्
तुर्यांशं मनुमात्रं वा त्रयोदशांगुलं तु वा ३१
भानुरुद्रांगुलं वाथ द्व्यंतरं षड्विधं भवेत्
कक्षाद्धनुर्धनुर्हस्ते मणिबन्धांतरं तथा ३२
तत्करे कूर्परोद्धारं हृदयांतमुदाहृतम्
एकद्वित्रिचतुःपञ्चमात्रं तस्मान्नतं तु वा ३३
सर्वेषामपि सामान्यं द्व्यंतरं कथितं मतम्
तदेव पूर्वहस्तौ द्वौ कटकौ हृदयस्थितौ ३४
वामं दक्षिणहस्तं च क्रमादूर्ध्वमधोमुखम्
बाणमूलधृतं सव्यं वामं बाणाग्रकं मतम् ३५
परहस्ते दक्षिणे टंकं धनूंषि वामहस्तके
सव्ये पार्श्वे भृगुर्वाथ वामे गौरी समायुतम् ३६
अपस्मारं विना पादं नतसूत्रं च पूर्ववत्
एवं चतुर्भुजोपेता मूर्तिः पञ्चविधा भवेत् ३७
अतिभंगं नतोपेतमष्टहस्तसमन्वितम्
बाणं च परशुं खड्गं वज्रं वै दक्षिणे करे ३८
धनुश्च विस्मयं खेटं मृगं हस्तं तथैव च
वामहस्तमिदं ख्यातं पूर्वहस्तात् करान्तकम् ३९

यथा शोभं तथा तुंगं कल्पयेत् गौरिसंयुतम्
षष्ठमप्येवमाख्यातं सप्तमं चाप्यथोच्यते ४०
बाणं चक्रं तथा शूलं टंकं वज्रं च दक्षिणे
धनुः खड्गं तथा सूचिं विस्मयं खेटकं तथा ४१
वामे पञ्चकरं ख्यातमतिभंगमथोपरि
तथैव दक्षिणं जानु वामोपरि निधापयेत् ४२
तत्पूर्वे वामपादं तु तले न्यस्य रथोपरि
रथं तु मुकुळोपेतं मुकुळं रज्जुना वृतम् ४३
मुकुळाभ्यन्तरे ब्रह्मा चतुर्वक्त्रं चतुर्भुजम्
तस्य दक्षिणहस्तौ द्वौ वेणुदण्डकमण्डलुम् ४४
कुण्डिकापद्मपाशं च वामहस्तद्वयोर्धृतम्
रथस्य मुकुळाधस्तात् वृषभं श्वेतवर्णकम् ४५
रथं पूर्वेण मार्गेण कल्पयेत्कल्पवित्तमः
त्रिपुरान्तकमाख्यातं अष्टभेदं द्विजोत्तम ४६
प्रवाळसदृशप्रख्यं सत्वराजससंयुतम्
सर्वाभरणसंयुक्तमेकवक्त्रं त्रिणेत्रकम् ४७
तस्य वामे स्थितां देवीं प्रागुक्तविधिना कुरु
सामान्यलक्षणं कार्यं त्रिपुरांतकमूर्तिनः ४८

इति काश्यपशिल्पे त्रिपुरांतकमूर्तिलक्षणं नाम सप्ततितमः पटलः समाप्तः

## अथैकसप्ततितमः पटलः

## कल्याणसुन्दरमूर्तिलक्षणम्

अथ कल्याणमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना
ललाटमध्यवामे तु वामनेत्रावसानके १

वामनासा पुटान्ते च हिक्कामध्ये च लंबयेत्
दक्षिणं नाभिमध्ये तु देवहत्वांगुलं भवेत् २
नीत्वा स्थितांघ्रिगुल्फस्य मध्ये सूत्रं प्रलंबयेत्
द्व्यन्तरं नतमानं च समभंगं यथा तथा ३
सुस्थितं वामपादं तु दक्षिणं कुञ्चितं भवेत्
दक्षिणं पूर्वहस्तं तु गौरीदक्षिणहस्तधृत् ४
वरदं वामहस्तं तु परहस्तद्वयोस्तथा
दक्षिणे परशुश्चापि वामे कृष्णमृगस्तथा ५
जटामकुटसंयुक्तः सर्वाभरणभूषितः
देवः प्रवाळवर्णाभः पार्श्वे तस्य विशेषतः ६
सव्य श्यामनिभादेवी प्राग्वन्मानादिसंयुता
उत्पलं वामहस्ते तु तथा दक्षिणहस्तकम् ७
शंभोर्हस्तेन संगृह्य लज्ञालंबसमन्वितम्
पूर्वस्यानुगुणं शीघ्रं सर्वाभरणभूषितम् ८
हस्ताभ्यां संस्पृशेद्वेदौ तौ गौर्यास्तु कटिं द्विजः
देवाग्रे कारयेत्कुण्डे होमकर्मप्रजापतिः ९
शंभोर्वैस्तनसीमान्तं प्रजेशस्योदयं भवेत्
चतुर्भुजं चतुर्वक्त्रं सर्वाभरणभूषितम् १०
कुण्डिका चाक्षमाला च वामदक्षकरे परे
स्रुक् स्रुवौ पूर्वहस्तौ तु धृते वामे तरे क्रमात् ११
उत्तराभिमुखासीनः पद्मपीठे प्रजापतिः
प्रगग्रौ देवी देवेशौ देवी देवस्य दक्षिणे १२
दक्षिणाभिमुखो विष्णुः होमस्योत्तरदिक्स्थितः
शंभोर्वै नासासीमान्तं श्रेष्ठायामं स्तनान्तकम् १३
तयोर्मध्येऽष्टधाभक्ते नवधा केशवोदयम्

श्यामवर्णं भवेद्गात्रं शङ्खं चक्रं परे करे १४
हिरण्यकरणैव पूर्वहस्तद्वयोपरि
संगृह्य वरदे हस्ते सुतीर्थोदकपूर्वकम् १५
अनादिगोत्रसंभूत श्रीशंभो परमेश्वर
आदिगोत्रामुमां गौरीं तवैवाद्यद दाम्यहम् १६
इत्युक्त्वा वरदे हस्ते दद्यात्तीर्थोदकं हरिः
अष्टलोकेशविद्येशसिद्धयक्षगणादयः १७
ऋषयश्चैव गन्धर्वाः अप्सराश्च सदैवताः
तत्तत् भक्तिसमोपेता हृदयेञ्जलिभिर्युताः १८
संभूतमासनोपेताः समीक्ष्य परितः स्थिताः
एवं कल्याणमूर्तिः स्यात् अर्धनारीश्वरं ततः १९

इति काश्यपशिल्पे कल्याणसुन्दरमूर्तिलक्षणं नाम
एकसप्ततितमः पटलः समाप्तः

## अथ द्विसप्ततितमः पटलः
## अर्धनारीश्वरमूर्तिलक्षणम्

अर्धनारीशमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना
चतुर्भुजं षड्भुजं च द्विभुजं परिकीर्तितम् १
समभंगस्थानकोक्तमार्गेणैव नतादयः
सुस्थितं दक्षिणं पादं वामं तु कुञ्चितं भवेत् २
वामार्धं पार्वती रूपं दक्षिणार्धं महेश्वरम्
अभयं परशुं सव्ये हस्ते वह्निं शिवांशके ३
वृषमूर्धनिविन्यस्तं कूर्परं वामहस्तकम्
तदन्यद्वामहस्तं तु कटकं पुष्पसंयुतम् ४
द्विभुजे वरदं सव्यं वामहस्तं तु पुष्पधृत्

शिवस्याभरणं सव्ये वामे स्त्रीभूषणाञ्चितम् ५
पुस्तकं दक्षिणे पार्श्वे वामे स्त्रीणां पयोधरम्
अथवा कुञ्चितं सव्यं पादं वामं तु सुस्थितम् ६
सव्यं शूलधरं हस्तं वामं पुष्पकरं मतम्
वरदं दक्षिणं हस्तमन्यद्वृषशिरस्स्थितम् ७
कपालं दक्षिणे हस्ते वामहस्तं प्रसारितम्
दक्षिणे रौद्रदृष्टिः स्यात् वामे पार्श्वे तु शीतलम् ८
दुकूलं चोरुमध्यान्तं सव्यं गुल्फान्तमन्यकम्
एवं संक्षेपतः प्रोक्तमर्धनारीश्वरं परम् ९

इति काश्यपशिल्पे अर्धनारीश्वरलक्षणं नाम
द्विसप्ततितमः पटलः समाप्तः

## अथ त्रिसप्ततितमः पटलः
## गजसंहारमूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण गजहामूर्तिलक्षणम्
ललाटमध्ये नासाग्रे वामे तु स्तनमध्यमात् १
वामद्विपिण्डमध्यात्तु पूर्वसूत्रं प्रसारयेत्
तत्सूत्राद्दक्षिणे वामे पादपार्ष्ण्यन्तरं द्विज २
साष्टत्रिंशतिमात्रं वा षट्त्रिंशत्यंगुलं तु वा
तत्सूत्रात् वामतः सव्य पादांगुष्ठान्तरं द्विज ३
एकविंशतिमात्रं वा एकोनविंशदेव वा
चतुर्हस्तं वाष्टहस्तं सर्वाभरणसंयुतम् ४
चतुर्भुजं चेत्पाशं च गजचर्म च दक्षिणे
गजशृंगं चर्म च स्यात् वामपार्श्वकरद्वये ५
चतुर्हस्तमेवमुक्तमष्टहस्तमथोच्यते

शूलं डमरुकं पाशं गजचर्म च दक्षिणे ६
गजशृंगं कपालं च गजचर्म च विस्मयम्
वामपार्श्वे चतुर्णां च हस्तानां संप्रकीर्तितम् ७
शंभोर्वामांघ्र्यधस्तात्तु गजस्यैव तु मस्तकम्
मकुटस्योपरिष्टात्तु गजपुच्छं प्रकाशयेत् ८
पार्श्वयोः गजपादांस्तु यथा युक्त्या तु कारयेत्
प्रभामण्डलवत् शेषं गजचर्म प्रकल्पयेत् ९
शूलं खड्गं चर्मचापि गजशृंगं च दक्षिणे
कपालं खेटकं खड्गं गज चर्म च वामके १०
ललाटमध्ये नासाग्रं दक्षिणस्तनमध्यमात्
सव्यपीठस्य मध्यं तु लंबयेत् ब्रह्मसूत्रकम् ११
सुस्थितं वामपादं तु गजस्य मस्तकोपरि
उद्धृतं दक्षिणं पादं वाममुत्कुटिकं भवेत् १२
तदंघ्रिपार्ष्ण्योः स्फिक्पिण्डात् द्व्यन्तरं चतुरंगुलम्
तज्जानुवामकक्षस्य अपि सूत्रसमं नयेत् १३
एवं तु द्विविधं नीत्वा गजहामूर्तिरुच्यते
स्कन्धोच्छ्रिता ह्युमादेवी शंभोर्वामे भयान्विता १४
एवं हि कल्पितं बिंबं धनधान्यसमृद्धिदम् १५

इति काश्यपशिल्पे गजहामूर्तिलक्षणं नाम
त्रिसप्ततितमः पटलः समाप्तः

अथ चतुस्सप्ततितमः पटलः
पाशुपतमूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण पाशुपतस्य लक्षणम्
समवत्स्थानकं प्रोक्तं चन्द्रशेखरमूर्तिवत् १

त्रिणेत्रं च चतुर्बाहुमूर्ध्वकेशं महातनुम्
अभयं शूलहस्तं च दक्षिणे तु करद्वये २
वरदं चाक्षमाला च वामपार्श्वकरद्वये
प्रवाळसदृशप्रख्यं सौम्यनेत्रं तु शीतलम् ३
सर्वाभरणसंयुक्तं किंचित्प्रहसिताननम्
नित्योत्सवार्थबिंबार्थं स्थानकं वासनं तु वा ४
तदेवाग्निसमं वर्णं रक्ताक्षं कुटिलभ्रुवम्
तीक्ष्णनेत्रत्रयैर्युक्तं व्याळयज्ञोपवीतिनम् ५
ज्वालानलशिखाकारमतिरत्ननिवासधृक्
शूलं त्वधोमुखं धृत्वा कपालं वरदोद्धृतम् ६
अथाभयं विना शूलमूलं धृत्वा तु तत्करे
शूलाग्रं वरदेनैव संगृह्य तु तलोद्धृतम् ७
दक्षिणे तु परे हस्ते टंकं खड्गं तु वामके
रौद्रं पाशुपतं ह्येतत् बलिलिंगे तु पूज्यते ८
ध्यानपूजा निमित्तायां एतन्मूर्तिं वदाम्यहम्
एतन्मूर्तिं सकृत् ध्यायेत्सर्वशत्रुविनाशनम् ९
एवं तु रौद्रमूर्तिस्स्यात् प्रतिमां नैव कारयेत् १०

इति काश्यपशिल्पे पाशुपतमूर्तिलक्षणं नाम
चतुस्सप्ततितमः पटलः समाप्तः

## अथ पञ्चसप्ततितमः पटलः
## कङ्कालमूर्तिलक्षणम्

अथ कंकाळमूर्तेस्तु लक्षणं वक्ष्यतेऽधुना
पादौ तु पादुकोपेतौ कंकाळं भिक्षुलक्षणम् १
रक्षार्थं परिवारार्थं मोक्षार्थं तु विधीयते

स्थानकं गमनं ग्राह्यं द्वाविंशं तु प्रवक्ष्यते २
स्थानकं मूलबेरं च गमनं चोत्सवं भवेत्
दारुजा लोहजा वाथ सुधामृत् शर्करा मयी ३
शिलां च चित्रं वा कुर्यात् प्रतिमां वा यथाविधि
एवं च प्रतिमां कुर्यात् मानोन्मानप्रमाणवित् ४
प्रमाणमंगैर्वा कृत्वा मानं संग्राह्य बुद्धिमान्
अंगुलैर्यवसंयुक्तैः हस्ततालवितस्तिभिः ५
आयादिशुभं संग्राह्यं मानं शुद्ध्यर्थकं भवेत्
पादावधिष्ठानमानं वा द्वारतुंगसमेपि वा ६
मूललिंगसमोत्तुंगं सार्धं द्वित्रियवं तु वा
तयोर्मध्येष्टभागे तु नवधा तुंगमानकम् ७
उत्सवोदयमानेन समस्तविधिरुच्यते
वामपादं स्थितं चैव दक्षिणं गम्य वक्ष्यते ८
पादौ पादुकया युक्तौ दक्षिणं कुंचितं भवेत्
पाष्र्ण्यूर्ध्वदृग्भवेत्पूर्वं ब्रह्मसूत्रं प्रलंबयेत् ९
पूर्वहस्तं कृतं वापि दक्षिणे कर्षके धृतम्
हिरण्यस्य कृतं वापि तर्जन्यं गुष्ठस्पृक्यया १०
योनिसीमावसानेन दूर्वाकार इवापि वा
अथ वामकरे पात्रं नाभिसीमावसानकम् ११
डमरुं पूर्वहस्ते तु हनुसीमावसानकम्
वामेशूलस्य हस्तं वा शिखिपिक्षखण्डसंयुतम् १२
कंकाळं च तदग्रे तु बद्धं तु हृदयोपरि
बाहुसीमावसानेन तत्कन्या च्यविकं भवेत् १३
एकद्वित्रिचतुर्मात्रं नताधिक्यादिमेव वा
स्थानके पूर्वसूत्रं वा भंगमानमथो शृणु १४

ललाटवामपार्श्वे च नेत्रान्ते च पुटान्तके
हनोर्वामे तु हिक्कायां हृदये काककोलकम्  १५
नाभेश्च दक्षिणे सूत्रं पक्षांगुलमिति त्रयम्
योनिनीप्रं तु सूत्रं वा दक्षिणे युगमात्रकम्  १६
वामपादस्थितं वापि द्विपादान्तरमध्यमे
स्थानकं ह्येवमाख्यातं गमनेषू विधीयते  १७
गमनस्य तु सूत्रं तु ललाटे वामपार्श्वके
वामांघ्रिगुल्फमध्ये तु द्विपार्श्वके सूत्रकं भवेत्  १८
सूत्रं ललाटमध्ये च दक्षिणे तु द्व्यांगुलं
वामे च पुटपार्श्वे तु हिक्काहृदयमध्यमे  १९
नाभिवामे द्व्यांगुल्यं योनिवामे युगांगुलं
वामांघ्रिगुल्फस्पृशं स्यात् गमनस्य तु सूत्रकम्  २०
आभंगस्योक्तमार्गेण नतमानं च बुद्धिमान्
गमने सूत्रकं वापि हस्तयोर्नीप्रमेव वा  २१
सव्यहस्ततृणं कुर्यात्सूत्राद्व्यन्तरमंशकम्
द्वाविंशत्यंगुलं वापि त्रयोविंशतिरेव वा  २२
मणिबन्धे मध्यमां तु बाह्यं चैव तथैव हि
नीप्रं तत् त्रिविधं चैव पात्रे वामकरेपि वा  २३
कलासप्तदशं चाष्टमानानौ चापि नीप्रकम्
नाभिसीमावसाने तु कूर्परं तस्य नीप्रकम्  २४
पञ्चांगुलमथो वापि तिथिषोडशमेव वा
दक्षिणं तृणकं हस्ते योनिसीमावसानके  २५
एकद्वित्रिचतुर्मात्रं मृगसस्य प्रलंबयेत्
ज्ञानमुद्रां सिंहकर्णं यथा सौन्दर्यमाचरेत्  २६
वामहस्ते परे शूलं बाहुसीमावसानकम्

पूर्वसूत्रं तथैव स्यात् शिखाबन्धस्य नीप्रकम्  २७
चत्वारिंशतिमात्रं वा शूलं तु खगुतोपरि
शूलाग्रोघातुकोपीवा कंकाळं बन्धयेत्सुधीः  २८
दक्षिणे परहस्तेन डमरुं कटकेपि वा
तुटिदीर्घस्य विस्तारं नवांशैरितिकेपि वा  २९
मध्यं क्षीणं युगांगुल्यं पद्माकारं द्विपार्श्वके
वलयत्रयसंयुक्तं तर्जनी ऋजुतो भवेत्  ३०
तर्जन्यांगृह्यमेवं हि हनुसीमावसानकम्
मणिबन्धस्य नीप्रं तु पूर्वसूत्रं तथैव च  ३१
चत्वारिंशतिमात्रं स्यादंशाधिकमथापि वा
वामे कपालपात्रं वा भान्वंशं रसनीप्रकम्  ३२
घनं मेघांगुलं वापि सुवृत्तं निर्व्रणं भवेत्
मकरकुण्डलं वापि शंखपत्रं तु वामके  ३३
जटामकुटमेवोक्तं विकीर्णं केशमण्डलम्
दक्षिणे तु शेखरं वा पाजन्विर्वामकेपि वा  ३४
करोटिमन्दबन्धं च धुत्तूरकुसुमावृतौ
बकपक्षं तथैवोक्तमर्कपुष्पैश्च दूर्वकैः  ३५
पिकाकिजगबन्धं च कटौ क्षुद्राक्षमालिका
नागकंकणं कोष्ठेषु नानारत्नविभूषितम्  ३६
एतत्कंकाळनामास्ति वामस्कन्धोपरि त्यजेत्
अनेकभूतैर्जायाभिः सेवितं वन्दितं च तैः  ३७
बलिपात्रधृतं भूतमग्रे मांससमन्वितम्
दद्यात्वन्नं तु तत्पात्रे निधायाकृतिजा यया  ३८
किंचित् प्रकाशितयोनिसंयुक्तं नतवाससा
संभूता मनसोपेता जायास्सर्वत्र नैकशः  ३९

दक्षिणे कटिपार्श्वे तु छुरिकाश्चैव बन्धयेत्
छुरिका हेमसंकाशमुपबन्धसमञ्चिता ४०
उभयोः पार्श्वयोर्हस्तेनानानागैर्विभूषितम्
ऋषिभिर्देवगन्धर्वैस्सिद्धविद्याधरादिभिः ४१
हृदयं कलिसंयुक्तं संभ्रान्तमनसांचितैः
सर्वनित्यं सदानन्दं सेविताद्यैः सुपूजितम् ४२
वीथीं संमार्जयेद्वायुः पर्जन्यस्सेचयेत् जलम्
पुष्पवृष्टिकृतोदेवाः ऋषयः स्तोत्रपाठकाः ४३
ऋग्यजुस्सामाथर्वाणः स्तुतिं कुर्युः परे परे
चर्मबन्धं च कांस्यं च वीणां सुषिरमेव च ४४
शंखध्वनिसमायुक्तं पञ्चवाद्यं समारभेत्
तुंबुरुर्नारदश्चैव जयवाद्यं सलक्षणम् ४५
चंद्रादित्यादिचिद्रोजाद्यामरादिव्ययोषितः
सर्वलोकोपकारार्थमिन्द्रस्य सवनादिषु ४६
वा भूता गमना देवा योन्ये वा वसानकम्
पञ्चतालेन भूतं च मानोन्मानप्रमाणकम् ४७
भूते तु शिरसः पात्रं द्विहस्तस्पर्श एव वा
पात्रविस्तारकं चापि विंशतिरंगुलं तु वा ४८
निम्नमानं दशांगुल्यं घनमेकांगुलं भवेत्
हिरण्यं दक्षदिग्भागे जानुसीमावसानकम् ४९
मूर्धादिपादपर्यन्तं हरिणी तुंगमेव च
देवस्य पूर्वसूत्रे तु स्पर्शमानं तथैव हि ५०
नासाग्रे लंबयेत्सूत्रं वामांगुष्ठस्य मूलके
जटाग्रे विंशदंगुल्यं त्रयोविंशदथांगुलम् ५१
स्पर्शनं कुक्षिनासाग्रमंगुष्ठमूलं लंबयेत्

सूत्रवामे तु नीप्रान्तमंगुष्ठांगुल्य शरांगुलम् ५२
तत्सूत्रात् दक्षिणांगुष्ठनीप्रकं तु नवांगुलम्
दशरुद्रांगुलं वापि द्वादशांगुलमेव वा ५३
सूत्रस्थानं तु निम्नं वा सर्वपार्ष्णर्यन्तरेपि वा
द्वाविंशदंगुलं वापि त्रयोविंशतिरेव वा ५४
सूत्रात्पार्श्वं तु सीमान्तं दक्षिणांगुष्ठनिम्नकम्
एकद्वित्रिचतुःपञ्च रसांगुल्यं तु नीप्रकम् ५५
पीठे दक्षिणपार्ष्णर्ये तु वेदपञ्चरसांगुलम्
पादुकायामकं वापि पादतालायसीमकम् ५६
उत्सेधेन गुणांगुल्यमूर्ध्वमानं तु पद्मकम्
तर्जन्यंगुष्ठयोर्मध्ये मुकुळाकृतिबन्धयेत् ५७
द्व्यंगुलं कुमुदोत्सेधं सुवृत्तं सुन्दरं भवेत्
कैलासशिखरे रम्ये श्रीगन्धे देवनायकः ५८
ऋषीणां संगमे प्रीत्या भगवान् परमेश्वरः
दण्डकारण्यलीलायां मुनीनां सर्वशान्तये ५९
तेषां श्रीणां च पौरन्ध्रय विघाताय च लीलया
भिक्षास्वरूपीनग्नेन कटिसूत्रविवर्जितः ६०
इत्येवं परमेशानः कैलासं त्रैविनीयतम्
भिक्षां करोम्यहं विप्र कंकाळस्य तु मोक्षणं ६१
काश्यप उवाच
त्वया वै वर्धितं चास्य कंकाळस्य बलं कथम्
शिव उवाच
इदानीं पुरतो विप्र कथ्यते तत्सविस्तरम् ६२
तदहं भुवनादीनि याचे भयपुरस्करः
कंपितस्तु समस्तानि भुवनान्यधिवासितः ६३

प्रार्थयेद्यस्तु मां भिक्षां मांसं भयनिवृत्तये
अण्डानां सुस्थितार्थं च सर्वलोकोपकारकम् ६४
कंकाळमोचनान्तं तु तद्धुनैवमहं द्विज
भिक्षान्तेमोचयेदेतत्कंकाळमभयं भवेत् ६५
काश्यप उवाच
एवं कंकाळमाख्यातं हरिहरार्धमथ शृणु ६६
इति काश्यपशिल्पे कंकाळमूर्तिलक्षणं नाम
पञ्चसप्ततितमः पटलः समाप्तः

अथ षट्सप्ततितमः पटलः
हरिहरार्धमूर्तिलक्षणम्
अथ वक्ष्ये विशेषेण हरिमर्धहरं परम्
आर्जवं सुस्थितं स्थानं स्थानकं समपादकम् १
दक्षिणं चाभयं वामं कटकं चोरुमाश्रितम्
परशुं दक्षिणे वामे शंखायुधधरं परम् २
सव्ये वामे च मुकुटे जटाकीरीटमण्डितम्
प्रवाळाभं श्यामरूपं तद्योग्याभरणान्वितम् ३
दक्षिणे तूग्रदृष्टिः स्यात् वामे दृष्टिः सुशीतला
किञ्चित्प्रकाशितं चोर्ध्वं दृष्टिस्तु तल्ललाटके ४
सर्वाभरणसंयुक्तं दिगंबरसमन्वितम्
शिरश्चन्द्रकलायुक्तं तस्य लक्षणमुच्यते ५
रुद्रांशकविशालं तु तद्भागांशेन वर्धितम्
सुवृत्तं चक्रवद्विप्र पद्माकृतिरथापि वा ६
शिरश्चक्रविशालं तु सप्तभागैकभागिकम्
शिरसश्चक्रनाळस्य विस्तारं द्विजसत्तम ७

चक्रवामत्रिभागैकं चक्रदं शिरसोन्नतम्
अग्रे ललाटपट्टस्य शिरश्चक्रस्य नालकम् ८
चक्रं तर्जनीमालंब्य पुष्पमालां च मध्यमाम्
सर्वेषां देवदेवीनामेवमेव समाचरेत् ९

इति काश्यपशिल्पे हरिहरार्धलक्षणं नाम
षट्सप्ततितमः पटलः समाप्तः

अथ सप्तसप्ततितमः पटलः
भिक्षाटनमूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण भिक्षाटनमहेश्वरम्
पादौ पादुकसंयुक्तौ वामपादं तु सुस्थितम् १
ईषदुद्धृत्य सव्यं तु पादं तु गमनोत्सुकम्
ललाटमध्यमात्सव्ये नवाष्टौ वा यवान्तरे २
नासाग्रे त्वधरे वामे हिक्कामध्यात्तु वामके
हृन्मध्ये नाभिसव्ये तु षोडशं तु यवान्तरम् ३
स्थितांघ्रिगुल्फमध्ये तु पूर्वसूत्रं प्रलंबयेत्
आभंगं तु नतं कार्यं समभंगमथापि वा ४
पादौ पादुकसंयुक्तौ पादुकारहितौ तु वा
सुविकीर्णजटाभारं जटामण्डलमेव वा ५
वृत्तबन्धजटाभारं नग्नरूपं नताननम्
ललाटपट्टसंयुक्तं करोट्यर्धेन्दुशेखरम् ६
सर्वाभरणसंयुक्तं कटिसूत्रविवर्जितम्
शुद्धश्वेतनिभं प्रोक्तं नानानागविभूषितम् ७
दक्षिणे पूर्वहस्तं तु मृगन्यासान्तकं भवेत्
वामे तु पूर्वहस्तं तु वरदं स्यात्कपालभृत् ८

दक्षिणे परहस्ते तु डमरुं च धरेत् द्विज
वामे तु शिखिपिंच्छं च कर्तव्यं चातिशीतलं ९
सितवस्त्रोत्तरीयं तु नागेन कटिवेष्टितम्
श्वेतयज्ञोपवीतं तु नीलकण्ठत्रिपुण्ड्रधृक् १०
पद्मपीठोपरिष्टात्तु शेषं कंकाळमूर्तिवत् ११

इति काश्यपशिल्पे भिक्षाटनमूर्तिलक्षणं नाम
सप्तसप्तितितमः पटलः समाप्तः

अथाष्टसप्ततितमः पटलः
चण्डेशानुग्रहमूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण चण्डेशानुग्रहं परम्
उमा सहितवत्सर्वं वामे किञ्चिन्नताननम् १
दक्षिणे त्वभयं वर्ज्यं तथा त्वाभरणं भवेत्
वामे तु कटकं न्यस्य अधस्तात् चण्डमूर्तिनां २
हृदयेञ्जलिसंयुक्तं चण्डेशं भक्तिसंयुतम्
आसीनौ पद्मपीठे तु चण्डेशं स्वर्णवर्णभम् ३
देवदेवेशयोर्मध्ये स्कन्दमूर्तिं विना बुध
चण्डेशानुग्रहं ख्यातं दक्षिणेशमतः परम् ४

इति काश्यपशिल्पे चण्डेशानुग्रहमूर्तिलक्षणं नाम
अष्टसप्ततितमः पटलः समाप्तः

अथैकोनाशीतितमः पटलः
दक्षिणामूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण दक्षिणामूर्तिलक्षणम्
लंबयेत् दक्षिणं पादं वामांघ्रिनळकाग्रकम् १

सव्योर्वग्रे निधातव्यं वामपादं तु शाययेत्
ललाटदक्षिणे सव्ये नेत्रान्ते तत्पुटान्तके २
हिक्कामध्यस्य वामे तु हृन्मध्यस्य तु वामके
यवत्रयान्तरं नीत्वा लंब्य नाभेस्तु मध्यमे ३
मेढ्रमूलस्य मध्ये तु पूर्वसूत्रं तु लंबयेत्
नतमत्यर्थमात्रं स्यात् चतुर्भुजसमन्वितम् ४
दक्षिणे पूर्वहस्तं तु ज्ञानमुद्राञ्चितं भवेत्
दक्षिणे परहस्ते तु अक्षमालाधरं परम् ५
परदं पूर्वहस्तं स्याद्दण्डहस्तमथापि वा
वामजानूपरिष्टाच्च वरदे तलपृष्ठकम् ६
वामजानूपरिष्टात्तु दण्डं चेत्कूर्परं न्यसेत्
वामेत्वपरहस्ते तु वह्निर्वा व्याळ एव वा ७
विकीर्णमूर्धजं वापि जटामण्डलमेव वा
जटानिबद्धमूर्तिर्वा जटामकुटमेव वा ८
वामे धत्तूरनागौ च दक्षिणे चंद्रशेखरम्
हसितवक्त्रसंयुक्तं सर्वाभरणभूषितम् ९
हितवस्त्रोत्तरीयं च सितयज्ञोपवीतिनम्
त्रिणेत्रं शंखजं वामे सव्ये मकरकुण्डलम् १०
कर्णौ तु शंखपत्रैर्वा कुण्डलैर्वाथ मण्डितौ
रुद्राक्षैः कण्ठमालाभिः हृन्मालाभिर्विभूषितम् ११
व्याघ्रचर्माबरोपेतं सर्वक्लेशविवर्जितम्
नारदो जमदग्निश्च वसिष्ठो दक्षिणे भृगुः १२
भरद्वाजश्च शुनकश्चागस्त्यो वामपार्श्वके
वन्दितं किन्नराद्यैश्च वटवृक्षं समाश्रितम् १३
अपस्मारोपरिष्टात्तु लंबपादतलं न्यसेत्

सूत्रं तत्पादपार्ष्णर्यं तु वेदं स्यान्मनुमात्रकम् १४
सूत्रं तत्पादजानोस्तु द्व्यन्तरं भानुमात्रकम्
श्यामवर्णमपस्मारं नागलीलासमन्वितम् १५
धर्मव्याख्यानमित्येवं कल्पयेत्कल्पवित्तमः
तदेव वामपादेनोत्कुटिकासनसंयुतम् १६
पूर्वहस्तद्वये वीणा धरं युक्त्या द्विजोत्तम
शेषं प्रागिव कर्तव्यं एतत् वीणा धरं परम् १७
तदेव वीणा हीनं तु ज्ञानमुद्राभयान्वितम्
वामं प्रसारितं हस्तं वामजानूर्ध्वकूर्परम् १८
दक्षिणे तु परे चाक्षमालां वामेब्जमुत्पलम्
शुद्धश्वेतनिभं वर्णं शेषं पूर्ववदाचरेत् १९
ज्ञानमूर्तिरिति ख्यातं सर्वालंकारसंयुतम्
अन्योन्यांघ्रितलं विप्र स्फिक्पिण्डाधः प्रकल्पयेत् २०
ज्ञानमुद्राहृदिस्थाने त्वभ्यन्तरमुखं करम्
वरदं वामहस्तं तु मेढ्रमूलोपरिन्यसेत् २१
दक्षिणे चाब्जमाला वा मालाब्जं वामहस्तके
नासाग्रं तु समीक्ष्याक्षा वार्जवं सूत्रभेदकाः २२
अपरे तु जटालंबमृषिभिस्सेवितं परम्
योगमूर्तिरिति ख्यातं ध्याने दुःखनिवृत्तिदम् २३
लंबयेद्दक्षिणं पादं वाममुत्कुटिकासनम्
योगपट्टं तथा बध्वा देहं चोत्कुटिकांघ्रिके २४
प्रसार्यवामहस्तं तु वामजानूपरिद्विज
प्रागिवैव कृतं शेषं योगमूर्त्यपरं हि तत् २५
ऊरुमूर्ध्नसमायुक्तावन्योन्यं पादपार्ष्णिकौ
योगपट्टिकयोपेतं जंघामध्यं द्विजोत्तम २६

प्रसार्य पूर्वहस्तौ तु जानूपरि निधापितौ
अपरे दक्षिणे चाक्षमाला वामे कमण्डलुः २७
जटामण्डलसंयुक्तं करोटचर्धेन्दुशेखरम्
नीलग्रीवसमायुक्तं शंखकुन्देन्दुसन्निभम् २८
अपरे चार्पयेद्वृक्षं नानासर्पविभूषितं
हृन्मालाकण्ठमालाद्यैः रुद्राक्षैश्च विराजितम् २९
वटवृक्षं समाश्रित्य ऋषिभिस्सेवितं परम्
एवं त्वनेकभेदेन दक्षिणामूर्तिरुच्यते ३०

इति काश्यपशिल्पे दक्षिणामूर्तिलक्षणं नाम
एकोनाशीतितमः पटलः समाप्तः

अथाशीतितमः पटलः
कालसंहारमूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण कालहामूर्तिलक्षणम्
वसुनन्ददशांशं वा नतमानं द्विजोत्तम १
रुद्रभान्वंगुलं वाथ नतमानमिहोच्यते
ललाटदक्षिणे सव्ये तन्त्रमध्ये तथैव च २
हिक्कामध्यस्य वामे तु वामस्तनाक्षदक्षिणे
नाभिमध्यमवामे तु सूत्रान्तरं यवाष्टकम् ३
मेढ्रमूलस्य मध्यात्तु वामे षडंगुलं भवेत्
स्थितांघ्रिगुल्फमध्ये तु पूर्वसूत्रं प्रलंबयेत् ४
देवस्य दक्षिणं पादं पद्मपीठोपरिस्थितम्
प्रथमं नृत्तमूर्तेस्तु दक्षिणं स्थितपादवत् ५
वामपादं धृतोद्धृत्य कुञ्चितं तलमुद्धृतम्
अंगुष्ठमुद्धृतं चाग्रे कालस्य हृदये न्यसेत् ६

सुदृष्टिः स्यात्त्रिणेत्रं च जटामकुटमरिडतम्
चतुर्भुजसमायुक्तमष्टहस्तमथापि वा ७
दक्षिणे पूर्वहस्तं तु शूलं करठान्तमुद्धृतम्
दक्षिणे तरहस्ते तु परशुः वरदं तु वा ८
वामे पूर्वकरं नाभिसीमान्तं सूच्यधोगतम्
करठान्तं शूलहस्ते तु मणिबन्धान्तरं भवेत् ९
वामे तु परहस्ते तु विस्मयं परिकल्पयेत्
हिक्कान्तमुष्णीषान्तं वा विस्मयेनामिकाग्रकम् १०
चतुर्हस्तं समाख्यातमष्टहस्तमथ शृणु
शूलं च परशुं वज्रं खड्गं दक्षिणहस्तके ११
वरदं डमरुं खेटं सूचीहस्तं च वामके
विद्रुमस्य निभाकारं सर्वाभरणभूषितम् १२
द्विभुजं च द्विपादं च सुदंष्ट्रं पाशपाणिकम्
करगडमकुटोपेतं मसूर्यापास्य निर्गमम् १३
महाभयसमायुक्तं हृदयाञ्जलिपाशकम्
विकीर्णकेशकं दृष्ट्वा शाययेदूर्ध्ववक्त्रकम् १४
कालहामूर्तिरेवं हि प्रोक्तं लिंगोद्भवं शृणु
इति काश्यपशिल्पे कालसंहारमूर्तिलक्षणं नामाशीतितमः
पटलः समाप्तः

अथैकाशीतितमः पटलः
लिङ्गोद्भवमूर्तिलक्षणम्

अथ वक्ष्ये विशेषेण लिंगोद्भवविधिं शृणु
लिंगाकारस्य मध्ये तु चंद्रशेखरमूर्तिवत् १
नळकात्तु पदान्तं तु लिंगे गूढं भवेदिह

पितामहो हंसरूपी ऊर्ध्वास्यो वामपार्श्वके २
विष्णुर्वराहरूपेण दक्षिणांशे त्वधोमुखः
विष्णुर्दक्षिणपार्श्वे तु वामपार्श्वे पितामहः ३
हृदयाञ्जलिसंयुक्तौ स्थितौ तौ लिंगमिष्यते
रक्तश्यामहिरण्याभाः ईशविष्णुपितामहाः ४
एवं लिंगोद्भवं ख्यातं वृक्षसंग्रहणं शृणु ५

इति काश्यपशिल्पे लिंगोद्भवमूर्तिलक्षणं नामैकाशीतितमः पटलः समाप्तः

अथ द्व्यशीतितमः पटलः

वृक्षसंग्रहणविधिः

अथ वक्ष्ये विशेषेण वृक्षसंग्रहणं परम्
देवानां चैव देवीनां शूलार्थं वृक्षमुच्यते १
पुंस्त्रीनपुंसकं चेति वृक्षभेदं त्रिधा भवेत्
सुषिरं स्थिग्धभूमौ वा आर्जवं सुदृढं घनम् २
अल्पगन्धसमायुक्तं फलं पुष्पं दृढं घनम्
शीतळोष्णसुसंमिश्रं मनोहरसमन्वितम् ३
यत्तत्पुंलिंगमाख्यातं देवानां तदिहोच्यते
स्निग्धे वाऽस्निग्धभूमौ वा वर्जयित्वाऽतिमार्दुलं ४
मूलादाग्रं क्रमात्क्षीणं पुष्पं चैव फलं दळम्
अतिमार्दवसंयुक्तमतिशीतलसंयुतम् ५
अतिस्नेहसमायुक्तं रसं चैव तथा भवेत्
एतत्स्त्रीवृक्षमाख्यातं देवीनां शूलयोग्यकम् ६
क्षीणमूलसमायुक्तं फलं पुष्पं दळं तथा
अतिदुर्बलमाख्यातं यत्तत्षण्डमुदाहृतम् ७

चन्दनं चंपकं चैव रक्तचन्दनमेव च
सालं च खदिरं चैव हेमशीर्षं च कुंकुमम्  ८
आर्जवं शिंशुपं चैव राजातसमयूरकम्
शूलयोग्यं क्रमात्ख्यातं तेष्वन्तस्थदृढं ग्रहेत्  ९
जीर्णं वर्णान्तरयुतं शिरश्शून्यं विशाखिकम्
स्वयं पतितवृक्षं च वाताशनिहतं तथा  १०
गुल्मवल्मीकसंयुक्तं व्याळपक्षिसमाश्रितम्
नृपमन्दिरसंस्थं च कर्मकारालयस्थितम्  ११
अग्निदग्धं तथा वृक्षं कर्मान्तरनियोजितम्
वर्जयेत्तु प्रयत्नेन गृहीते कर्मनाशनम्  १२
तस्मात्सर्वप्रयत्नेन दोषाढ्यं परिवर्जयेत्
शस्तपक्षर्तुवारेषु शस्तवृक्षांश्च संग्रहेत्  १३
आचार्यः शिल्पकर्ता च वृक्षस्थानं तु संव्रजेत्
वृक्षाधस्तात्तृणादीनि व्यपोह्य लेपनं कुरु  १४
एतन्मंत्रं समुच्चार्य अष्टदिक्षु बलिं क्षिपेत्
एतद्वृक्षाश्रिता देवा दानवाश्च पिशाचकाः  १५
नागा गरुडगन्धर्वाः सिद्धविद्याधराश्च ये
अयं बिंबार्थवृक्षस्तु गच्छध्वं स्वहिताय वै  १६
इत्युक्त्वा च बलिं दद्यात् दध्योदनं सपुष्पकम्
रक्तचन्दनसंयुक्तं गन्धतोयसमन्वितम्  १७
वृक्षस्येशानदिग्भागे ततो होमं समाचरेत्
स्थण्डिलं सैकतं कुर्यात् हस्तमात्रप्रमाणकम्  १८
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत्
समिदाज्य चरुभिस्तु होमं कृत्वा शिवं द्विजः  १९
समिधो हृदयेनैव मूलेनाज्यं च होमयेत्

अघोरेण चरुं हुत्वा प्रत्येकाष्टशताहुतीः २०
जयाद्यैरभ्यातानैश्च राष्ट्रभृद्भिश्च होमयेत्
ततस्त्वग्निं समुद्वास्य वृक्षं प्रोक्ष्य शिवांभसा २१
शिवात्मकेति मंत्रं तु जपेद्वृक्षं स्पृशन् बुधः
वृक्षस्य पूर्वभागे तु मुखं पृष्ठं तु पश्चिमे २२
दक्षिणं सव्यपार्श्वं स्यात् वामपार्श्वं तथोत्तरम्
ज्ञात्वैवं लक्षयित्वा तु तस्य च्छेदनमाचरेत् २३
अस्त्रमंत्रं जपन् वृक्षमूले त्रिः छेद्यलक्षयेत्
क्षीरतोयद्रुमश्चेष्टस्त्रुक्स्त्रुवार्थे तु शोभनम् २४
अस्त्रसुवेण मंत्रेण शक्तिहोमं समाचरेत्
वृक्षमूलमशेषं तु स्थपतिः छेदयेत्क्रमात् २५
पूर्वे वा चोत्तरे देशे वृक्षस्य पतनं शुभम्
अन्यदिक्पतितं वृक्षं वर्जयेत्तु प्रयत्नतः २६
स्कन्धच्छेदं ततः कुर्यादब्जवन्नान्तरं कुरु
गव्यैर्गन्धोदकैः स्नाप्य गन्धमाल्यैरलंकृतम् २७
नव वस्त्रेण संच्छाद्य दर्भैश्च सूक्ष्मरज्जुना
स्यन्दने शिबिकायां वाऽऽराप्य स्कन्धेथवा बुधः २८
धृत्वा शनैश्शनैर्गत्वा कर्ममण्डपमाविशेत्
मण्डपं मार्जनं कृत्वा गोमयालेपनं कुरु २९
पिष्टचूर्णैरलंकृत्य तन्मध्ये पूर्णवा बुधः
स्थण्डिलं कारयेद्विद्वान् शालां दीर्घसमायताम् ३०
विस्तारार्धं तदर्धं वा चतुरंगुलमुन्नतम्
प्रागग्रं स्थापयेत्तस्मिन् शूलवृक्षमधोमुखम् ३१
आशुष्कं रक्षयेद्विद्वान् मासं पक्षमथापि वा
पश्चादुक्तं तु कर्तव्यं त्वरितं तु न कारयेत् ३२

इति काश्यपशिल्पे वृक्षसंग्रहणविधिर्नाम
द्व्यशीतितमः पटलः समाप्तः

अथ त्र्यशीतितमः पटलः
शूलदारुनिर्माणविधिः

अथ वक्ष्ये विशेषेण शूललक्षणमुत्तमम्
शुद्धकायसमं वेशदण्डदीर्घमुदाहृतम् १
मध्योदरविशालं स्यात् चतुर्भागैकविस्तरम्
मूलादष्टांशहीने तु तस्याग्रस्य समं भवेत् २
नाभ्यन्तं चतुरश्रं तु हिक्कान्तं वसुकोणकम्
तदूर्ध्वं वृत्तमाख्यातं शेषं वृत्तं तथैव च ३
द्वात्रिंशदंगुलायामं वैकदण्डायतं भवेत्
विस्तारं सार्धषण्मात्रं सार्धसप्तांगुलं तु वा ४
विस्तारार्धं घनं ख्यातं पक्षदण्डान्तमुच्यते
अग्रं युगांगुलं ख्यातं मध्यादग्रं क्रमात्कृशम् ५
वक्षो दण्डस्य मध्ये तु छिद्रं सार्धगुणांगुलम्
हिक्कासूत्रादधस्तात्तु यावद्वै द्व्यंगुलावधि ६
वक्षो दण्डोर्ध्वसीमान्तं वंशदण्डं तु योजयेत्
षोडशांगुलमायामं कटिदण्डस्य कीर्तितं ७
वस्वंगुलं तु तत्तारं घनं वेदांगुलं भवेत्
मध्ये युगांगुलं छिद्रं तारं पञ्चांगुलादयम् ८
कटिदण्डोर्ध्वसीमाद्वा वंशदण्डे तु योजयेत्
पक्षदण्डादधो विप्र कटिदण्डाश्रयोपि वा ९
यथावत्कांशकं कुर्यादनेन विधिना कुरु
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टकरं तु वा १०

बिंबोचितकरं यावत्संख्यं वक्रशिखान्वितम्
द्व्यंगुलं तु शिखायाममस्तं संख्या विधीयते ११
पञ्चदण्डविशालं तु हस्तसंख्या तु भाजिते
शिलाव्यासं तदेवांशं मालाग्रे तु क्रमात्कृशम् १२
कटिदंडाश्रयं द्व्येकं शिखायामं गुणांगुलम्
सार्धांगुलं तु तत्तारं वृत्तं तत्समतद्धनम् १३
स्थानकं सकलं चेत्तु ऊरुदीर्घोपरि द्विज
अष्टांगुलं समारोप्य ऊरुशूलायतं भवेत् १४
आसने सकले चोरुदीर्घमूर्ध्वं न रोपयेत्
ऊरुमूलसुषिं कृत्वा कटिदण्डाग्रयोर्बुध १५
शिखायां तु समायोज्य यावद्धलन्तरं यथा
जानुमात्रं द्विधा कृत्वा ऊरुजंघान्तयोरपि १६
आरोपयेत् शिखामानं तस्मादारोपयेद्बुधः
गुणांगुलं शिखामानं जंघादीर्घोरुपर्युतं १७
मध्यबिन्दुसमायुक्तमूर्ध्वाग्रं तु शिखान्वितम्
जंघानागैकताभ्यासं --- उदाहृतम् १८
ऊर्ध्वाग्रे योजयेत्स्निग्धजंघाग्रशिखरं बुधः
गुणांगुलं शिखामानं जानुसन्ध्युच्छ्रितावधि १९
सन्धिभिन्नाग्रशूलं तु एक एव विधीयते
जंघादीर्घोपरिष्टात्तु तले मानं तु रोपयेत् २०
ऊरुमध्ये त्रिभागैकमूरुदण्डस्य विस्तृतम्
तस्याग्रं तु त्रिपादं स्यात् जंघामूलं च तत्समं २१
जंघामूलत्रिभागैकसीनं जंघाग्रविस्तृतम्
त्रिधा पादतलायामं कृत्वा भागद्वयं ततः २२
तलाग्रविस्तृतं तत्तत्त्रिद्व्यंशविस्तृतान्वितम्

एतत्पादतलव्यासं मध्यमूलायते परे २३
कर्तव्यं सुषिरं तस्मिन् जंघाग्रादधिकायुतम्
योज्यस्निग्धं दृढं कृत्वा बाहुशूलमथोच्यते २४
बाहुमूलविशालं तु गुणांगुलमुदाहृतम्
अग्रं द्वयांगुलव्यासं प्रोष्ठमूलं च तत्समम् २५
सार्धद्वयांगुलं वाथ प्रोष्ठमूलविशालकम्
तन्मूलविस्तृतार्धं स्यात्प्रकोष्ठाग्रविशालकम् २६
बाहुप्रकोष्ठयोश्चैव कूर्परं जानुवद्भवेत्
द्व्यंगुलं तु शिखामानं योजयेत्तद्दृढं यथा २७
पार्श्वयोर्वर्धनं चैव चांशदण्डे तु योजयेत्
अतिपक्षान्तरं दीर्घं तद्व्यासं तु गुणांगुलम् २८
वंशदण्डसमानम्र ऊर्ध्वकायस्तवान्वितम्
अग्रे तु वक्षदण्डे तु मूलदण्डे तु योजयेत् २९
स्वाग्रमूले तदा तस्य पार्श्ववंशे द्वयोरपि
हस्तपादतलाग्रेत्र ताम्रपत्रेण योजयेत् ३०
आर्जयेद्वस्त्रबिंबे वा शूलश्चैवावदं कुरु
देवानां शूलमेवं स्यात् देवीनामथ वक्ष्यते ३१
मध्योदरं त्रिधा भज्य एकांशं वंशविस्तरम्
अष्टांशहीनमग्रं स्यात् विशालं तस्य सूत्रकं ३२
बाहुपर्यन्तविस्तारं वातन्यर्थमिवार्जितम्
पक्षदण्डायतं शेषं तस्यार्धं विस्तृतं भवेत् ३३
तदर्धं बाहुदं ख्यातं कटिदण्डमथोच्यते
कटितारे तु भूतांशे युगांशं तस्य दीर्घकम् ३४
शेषं प्रागिव कर्तव्यं कश्च द्वेषमथ शृणु
आसने वंशदण्डं तु वस्वंगुलं तु रेख रोपयेत् ३५

गुणांशं पृष्ठमानं तु शेषं कर्तशुपोशनम्
जंघादण्डात्तु षण्मात्रं रोपयेत्स्थानके बुधः ३६
गर्भाग्रं तु प्रवेधं तु ततोधस्थं तु तद्भवेत्
शूलमेवं समाख्यातमुपशूलमथोच्यते ३७
भित्तिमध्यं समारभ्य पक्षदण्डकरान्तकम्
उपशूलायतं प्रोक्तमष्टांगुलं नतं भवेत् ३८
वेदांगुलं तु तन्नीप्रं शूलयोग्यं समे बुध
शूलव्याससमं बध्याच्छिद्रं तद्विंशदान्वितम् ३९
भित्तिमध्यं तु मूलं स्यात् मूलं बध्वा दृढं बुधः
पक्षदण्डं कटीदण्डं धृत्वा शूलाख्यशूलकम् ४०
छिद्रे दृढकरं बध्वा तत्परे कीलबन्धितम्
उपशूलविधानं च पक्षदण्डपुरं समम् ४१
उपशूलशिखायां तु वंशाग्रे सुषिरं कुरु
लोहजं दारुजं वाथ कीलकं योजयेद्दृढम् ४२
बिंबार्थं शूलमाख्यातं तस्मादुक्तं समाचरेत्
शूललक्षणमाख्यातं शूलस्थापनमुच्यते ४३
इति काश्यपशिल्पे शूललक्षणं नाम त्र्यशीतितमः पटलः समाप्तः

## अथ चतुरशीतितमः पटलः
### शूलस्थापनविधिः

अथ वक्ष्ये विशेषेण शूलस्थापनमुत्तमम्
कर्षणोदितमासे च ऋक्षे वारे सुलग्नके १
निश्चित्य स्थापनं तस्य पुरः कृत्वांकुरार्पणम्
प्रासादस्याग्रतो देशे मण्डपं चतुरश्रकम् २
पञ्चसप्तकरं वाथ नव हस्तमथापि वा

पंक्तिहस्तसमायुक्तं षोडशस्तंभभूषितम् ३
तलमष्टांगुलोत्सेधं पंक्तिव्यासांघ्रितुंगकम्
यथालाभपरीणाहं वक्रकं निर्व्रणं दृढम् ४
वलयं वंशनासाढ्यं नाळिकेरफलादिभिः
स्थापयेत्तु विधानेन मुक्ताग्रं दर्भमालिकम् ५
तरंगवेष्टनोपेतं वरतोरणसंयुतम्
चतुर्द्वारसमायुक्तं स्तंभवेष्टनसंयुतम् ६
चतुर्द्वारं विनान्यत्र निश्छिद्रं जालकं तु वा
मण्डपस्य त्रिभागैकं वेदिकोदयमुच्यते ७
गुणांगुलं विशालोच्चं मध्यायोद्धतपेटिका
दर्पणोदरसंकाशं कृत्वा रूपं दृढं लिखेत् ८
परितश्चाग्निकुण्डानि अनेन विधिना कुरु
चतुरश्रं धनुर्वृत्तं पद्मं पूर्वादिदिक्षु च ९
शक्रशंकरयोर्मध्ये वृत्तकुण्डं प्रकल्पयेत्
कुण्डमेवं समाख्यातं केवलानां विशेषतः १०
गौरी सहितबिंबं चेत्तत्कोणेष्वर्धपत्रवत्
कुण्डानि कल्पयेच्छेषं प्रागिवैव प्रकल्पयेत् ११
कुण्डलक्षणवत्कुर्यात्सर्वकुण्डानि देशिकः
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् १२
ब्राह्मणान् भोजयेत्तस्मिन् पुण्याहं वाचयेत्ततः
महेन्द्रस्तु पदं यावत् होमं कृत्वा विधानतः १३
वेदिकां चाग्निकुंडं च पर्यग्निकरणं कुरु
निर्दिष्टदिवसात्पूर्वरात्रौ स्यादधिवासनम् १४
स्थंडिलं वेदिकायां तु अष्टद्रोणैश्च शालिभिः
कर्तव्यं नळिनं तस्मिन् साष्टपत्रं सकर्णिकम् १५

तराडुलैस्तिलदर्भैश्च लाजैः पुष्पैरलंकृतम्
शयनं चाहतेनैव वस्त्रेणैव प्रकल्पयेत् १६
धूपदीपस्समायुक्तं पुष्पगन्धैस्समर्चयेत्
मराडपस्योत्तरे पार्श्वे स्थानशुभ्रं प्रकल्पयेत् १७
तन्मध्ये दारुपीठन्तु न्यस्य तस्योपरि द्विजः
प्राङ्मुखं स्थापयेत् शूलं पञ्चगव्याभिषेचितम् १८
शुचिहव्येतिमंत्रेण कृत्वा गन्धोदकैः हृदः
स्थापयेत् देवं देवीं च गन्धपुष्पैः समर्चयेत् १९
कौतुकं बन्धयेदेव तयोर्दक्षिणहस्तयोः
स्वर्णकार्पाससूत्रैर्वा कवचेनैव बन्धयेत् २०
लंबकूर्चसमायुक्तं वाद्यध्वनिसमायुतम्
शयने शाययेत् शूलं प्राक्शीर्षं चोर्ध्ववक्त्रकम् २१
तस्य वामे ह्युमादेवी शूलं वै शाययेत् सुधीः
तयोः शिरोग्निके देशे स्थापयेत्तु पटद्वयम् २२
सूत्रं सर्वाभिधानं च सकूर्चं वस्त्रवेष्टनं
द्रोणकुंभांबुसंपूर्णं शिवकुंभं तदुच्यते २३
तस्यार्धं तोयसंपूर्णं प्राग्वत्सूत्रादिभिर्युतम्
गौरी बीजसमायुक्तं गौरीकुंभमिदं परम् २४
तन्मूलमध्यमे कुंभं न्यस्यगन्धादिभिर्यजेत्
गौरी कुंभे तु तस्यास्तु मंत्रं न्यस्य विशेषतः २५
परितोष्टघटान् न्यस्य सूत्राद्यैश्च समन्वितान्
विद्येशान्मूलमन्त्रैश्च स्थाप्य गन्धादिभिः यजेत् २६
वास्तुहोमादिकं कुराडे अग्निं संस्थाप्य देशिकः
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् २७
अग्न्यर्थं पूर्वकुराडे तु वह्निमाग्नेय गोचरे

याम्ये चौदुंबरं ख्यातं खदिरं नैर्ऋते द्विज २८
बिंबं पश्चिमभागे तु मयूरं वायुगोचरे
पटं वै सौम्यकुण्डे तु खदिरं वास्तु देशिकः २९
प्रधाने ब्रह्मवृक्षः स्यात्समिद्गौरी समन्वितम्
विद्याकुण्डेषु कुण्डानि गौरी हीनानि कारयेत् ३०
समिधो हृदये नैव पुरुषेण घृताहुतीः
अघोरेण चरुं हुत्वा दाद्यां वामेन होमयेत् ३१
चरुमीशानमंत्रेण तिलं वै शिरसा हुनेत्
सर्षपंकवचेनैव शिखामंगळमुच्यते ३२
गलमंत्रेण मंत्रेण प्रत्येकं जुहुयात् शतम्
उच्यते व्याहृतिं हुत्वा देवी देवेशयोः समम् ३३
जयाद्यैरभ्यातानैश्च राष्टभृद्भिश्च होमयेत्
दिशास्वध्यायतं वेदां स्तोत्रैः स्तुतिशिखामुखैः ३४
अध्यानं कृततोदग्रमुपांशुहोममाचरेत्
देवीदेवेशयोर्मूलमंत्रैरष्टादशाहुतीः ३५
घृताहुतीस्तु कर्तव्यं भस्मस्नानमतः परम्
शुक्लवस्त्रोत्तरीयश्च शुक्लयज्ञोपवीतधृक् ३६
शुक्लमाल्यानुलेपाढ्यः पञ्चभूषणभूषितः
पवित्रपाणिनोपेतः सकली कृतविग्रहः ३७
आचार्यः सुप्रसन्नास्यः शिवद्विजकुलोद्भवः
प्रविश्य गर्भगेहं तु एकाशीतिपदं कुरु ३८
मण्डूकाख्यपदं वाथ सप्तसप्तांशमेव वा
गर्भगेहे तु कर्तव्यं ज्ञात्वा ब्रह्मोदयं परम् ३९
स्थानकं देविकांशे तु आसनं मानुषे पदे
गर्भगेहपरे भागे स्थापयेत् देशिकोत्तमः ४०

आसनं भद्रपीठेन स्थानकं वेदिकोपरि
प्रागुक्तविधिना पीठव्यासायामादयोमताः ४१
कर्तव्यं सुन्दरं तस्मिन् आधाराख्यशिलां न्यसेत्
पीठव्यासत्रिपादं तु आधाराख्यशिलातलम् ४२
समग्रमायतं वापि तदर्धं तद्धनं भवेत्
स्थानकं सकलं चेत्तु पादाधस्तात् द्विजोत्तम ४३
आधाराख्यशिलायां तु रत्नगर्तं प्रकल्पयेत्
निम्नं षडंगुलं ख्यातं कर्तव्यं स गुणांगुलम् ४४
मूले तु नवरत्नानि हेमपात्रं विनिक्षिपेत्
शूलपादतलाधस्तात् षण्मात्रं वायतान्वितम् ४५
प्रागेव कल्पयेत् धीमान्स्थापनार्थं बलान्वितम्
प्रविशेत् गर्भगेहं तु मूलमंत्रं समुच्चरन् ४६
स्थापयेत्तु पदे शूलं मूलमंत्रं दृढं तथा
अष्टबन्धं दृढं कृत्वा सुधया च विशेषतः ४७
तस्य वामे तथा स्थाप्यं गौरीशूलं विशेषतः
आधाराख्यशिलायां च गर्भभाजनसंयुतम् ४८
पञ्चषट्सप्तमात्रं वा गर्भव्यासं तथा समम्
गर्भन्यासं तु तत्रैव गर्भभाजनसंयुतम् ४९
प्रागुक्तविधिना सम्यक् गन्धपुष्पादिभिर्यजेत्
स्थापयेत्पूर्ववत् शूलं मूलं वै गर्भभाजनम् ५०
अथाशेषं तु यत्कर्म शिल्पिभिस्तु विशेषतः
कर्तव्यं लक्षणोपेतं स्थपतिः शिल्पिरुच्यते ५१
स्थपतिः शिल्पिकर्मा च योग्यस्त्वन्यैर्न कारयेत्
कृतं चेदन्यथा विप्र कर्तुरिच्छा भविष्यति ५२
आचार्यं पूजयेत्तत्र वस्त्रहेमांगुलीयकैः

दक्षिणां दापयेत्तत्र पञ्चनिष्कं हिरण्मयम्
शूलस्थापनमाख्यातं रज्जुबन्धमथ शृणु ५३

इति काश्यपशिल्पे शूलस्थापनविधिर्नाम
चतुरशीतितमः पटलः समाप्तः

## अथ पञ्चाशीतितमः पटलः

## रज्जुबन्धनविधिः

अथ वक्ष्ये विशेषेण रज्जुबन्धं सविस्तरम्
सर्वासु शूलसन्धासु ताम्रपत्रैः सुवेष्टयेत् १
शूलेऽष्टबन्धमालिप्य रज्जुबन्धं ततः कुरु
श्रीवेष्टकं दुरुष्कं च गुग्गुलं च गुडं तथा २
सर्जकं गैरिकं तैलं घृतं चाप्यष्टबन्धनम्
श्रीवेष्टकं चतुर्भागं कुन्दुरुष्कं गुणांशकम् ३
गुग्गुलं पञ्चभागं च एकांशगुळमुच्यते
सर्जकं चैव वस्वंशं गैरिकं तु गुणांशकम् ४
षडेतत्सूक्ष्मचूर्णं तु कृत्वाज्यतैलमिश्रितम्
मृत्पात्रे तु विनिक्षिप्य पचेत्क्षौद्रादिकं वरम् ५
तथैव शूलमालिप्य रज्जुबन्धं ततः कुरु
रज्जुबंधेनाभिमध्यात् नाड्यस्तूर्ध्वगताः त्रिधा ६
सुषुम्ना मध्यमाख्याता पिंगळा तस्य दक्षिणा
इडावै वामभागस्था प्रधानेनोर्ध्वगास्त्विमाः ७
द्व्यंगुलं तु परीणाहयुक्तास्तावै त्रिवर्तिकाः
तेषां नाडी त्रयाणां तु मूलं मेढ्रावसानकम् ८
मेढ्रमूलविभिन्नास्तु नाडयोष्टादश स्मृताः
विमला घोषिणी पृथ्वी वाहिनी चैव तेजनी ९

वायसी गमनी चैव मर्दिनी घोषिणी तथा
रसवर्तमृदंगी च स्रंसिनी च तथैव च १०
शब्दस्पृशांगी पूर्णा च सुसिंही वारिधारिणी
वाहिनी तामसीख्याता त्रिषट्संख्या विधानतः ११
प्रत्येकं त्रियवव्यासाः त्रित्रिवर्त्यः त्रिवर्त्मगाः
तास्वाद्या रसनाडयस्तु सव्यपादोरुमूलगाः १२
ऊरुमूलं समावृत्य परीता नळकान्तकम्
लंबितास्ते समाख्याताः सावैपिंगळमूलकं १३
शब्दादीनि तु षट्संख्याळडा मूले समुद्भवाः
एषां वै रसनाडीनां वामपादे तु सव्यवत् १४
नळकाग्रैवमावृत्य षण्णामग्रैकवर्तिता
सुषुम्नामूलगाः शेषाः वंशपार्श्वांगरोहिताः १५
पक्षदंडोपरिष्टात्तु तिर्यक् बाहुगतास्त्विमे
गमनी मर्दनी चैव रोहिणी दक्षिणे करे १६
रसवर्ती मृदंगी च स्रंसिनी वामबाहुका
बाहुमूलं समावृत्य त्रिष्वग्रं चैकवत् भवेत् १७
तस्याग्रे दष्टशाखासु दक्षिणेऽदक्षिणे तथा
बाहुमूलं तथान्तं तु नाडयोष्टौ प्रसारिताः १८
तदग्राण्येकतां प्राप्य बन्धैकप्रवणानि च
एवं वामे तु दृष्टं स्याद्धस्तं प्रणवमाचरेत् १९
एवं हि प्रतिमानां तु नाडीनामष्टविंशतिः
प्रधाना नाडयस्त्वेवं कल्पयेत्तंत्रवित्तमः २०
ततो भिन्नास्तथा विप्र अष्टाष्टौ नाडयस्तथा
ताभ्यस्त्वनेकधा नाडयः सर्वांगं तु समावृताः २१
चतुस्सप्तसहस्रं तु नाडयः परिकीर्तिताः

नाडिहस्तावृताः शूलाः जीर्णकः शूलपात्रवत् २२
नारिकेळफले पक्वे अत्यल्पसलिलान्विते
चर्मसारं गृहीत्वा तु सारादन्यत् व्यपोह्य च २३
नाडयश्चापि संकल्प्य पश्चादावृतनाडिकाः
षडयवं तु परीणाहं रज्जुमापादयेत् दृढम् २४
पश्चान्नीरन्ध्रकं रज्जुं बंधयेत् दक्षिणावृतम्
हृत्पद्मं साष्टपत्रं तु रज्जुना बंधयेत् बुधः २५
तस्य नाळं तु नाभ्यन्तं योज्यं सुषुम्नया सह
जीवस्थानं तु तत्पद्ममित्युक्तं हि मयाऽधुना २६
मूलमंत्रमनुस्मृत्य रज्जुबंधं ततः कुरु
रज्जुबन्धमिति ख्यातं मृत्संस्कारमतः परम् २७

इति काश्यपशिल्पे रज्जुबंधनलक्षणं नाम
पञ्चाशीतितमः पटलः समाप्तः

## अथ षडशीतितमः पटलः
## मृत्संस्कारविधिः

मृत्संस्कारमहं वक्ष्ये संक्षेपात् शृणु सुव्रत
जांगलं जानुरूपं च संमिश्रं मृत्त्रिधा भवेत् १
अशक्यं खननेऽत्यन्तं सुदृढं जांगलं भवेत्
तनुवालुकसंयुक्तमक्लेशात्खननक्षमम् २
त्रिहस्तं मनोरमं यत्तु दृष्टं तदनुरूपकम्
तयोर्मिश्रमिवाकारं मिश्रकं तदुदाहृतम् ३
तेष्वशोष्यजलोपेतशुद्धभूमौ मनोरमे
नदी कीरे कटाके वा श्वेतासृक्पीतकृष्णलम् ४
पङ्कं संगृह्य पात्रेषु जलमास्त्रावयेत्तु वा

पात्रस्थं शोषयेत्पङ्कं यावदल्पदृढं भवेत् ५
तावद्रव्य चतुर्क्षीरवृक्षत्वगुद्भवैर्जलैः
खदिरार्जुनतोयैश्च पात्रे पङ्कं तु मर्दयेत् ६
ततः पिराडक्षमं यावत्तावत्संशोषयेत्पुनः
त्रिफलोषितांभसा विप्र मर्दयित्वा तु शोषयेत् ७
ईषत्द्रवसमायुक्तं पिराडं कृत्वा तु तन्मृदा
पिराडे हस्ततलरेखा यथादृश्या तथा कुरु ८
यवताराष्टकोणाढ्यं कल्प्यमानं तलेन तु
रुद्रांगुलपरीणाहं प्रस्थमुक्तं मुदाहृतम् ९
सिकतं च शिलाचूर्णं सदृशं कल्पयेत् बुधः
मृत् चतुर्थांशमात्रं तु योजयेत्तु मृदा सह १०
मर्दयेत्त्रिफलातोयैः दशाष्टसप्तवासरम्
यवं गोधूमकं माषमतसीपुष्पसन्निभम् ११
मृदष्टांशं समायोज्य नारिकेळफलोदकैः
पात्रे तु मर्दयेत्सम्यक् दशाहं तु तलेन वै १२
श्रीवेष्टं गुग्गुलं चैव कुन्दुरुष्कं तथैव च
तथा सर्जरसं चूर्णं मृत्कलांशं शिवांशकम् १३
पात्रे मृदा समायोज्य दधिनामर्दयेत्सुधीः
शुराठी च पिप्पली चैव मरीचं रजनी तथा १४
समं चूर्णं तु संयोज्य मृद्दशांशं तु योजयेत्
मधुक्षीरघृतैरेव मृदा पात्रे तु मर्दयेत् १५
कपित्थबिल्वनिर्यास चूर्णौ द्वौ समतां कुरु
मृदे पञ्चदशांशे वा तैलचूर्णसमायुतम् १६
मर्दयेत्क्रमसाम्यार्थं कुष्ठगैरिकतालकम्
चन्दनागरुकर्पूरगोरोचनाश्च तत्समम् १७

चूर्णं कृत्वा तु संग्राह्यं मृत्त्रिंशांश समन्वितम्
अतसीस्नेहसंयुक्तं मर्दयेत् देशिकोत्तमः १८
सुवर्णरजतं चूर्णं यथालाभं तु योजयेत्
दिग्दिगन्नादिसस्यादिसागरे च हलस्तले १९
गजदन्ते वृषशृंगे गोमृगैश्च विशेषतः
संयोजयेत् यथालाभं नानागन्धसमन्वितम् २०
कपित्थनिर्यासजलैः मधुना वाथ मर्दयेत्
पञ्चरात्रोषितं कुर्यात् नारिकेरफले तथा २१
त्वक्सारं परिगृह्याथ एकसार्धद्वयांगुलम्
सार्धद्वयांगुलं वाथ सारेण सेचयेत् बुधः २२
मृच्चतुर्थांशसंयुक्तं मृल्लेपं तु समाचरेत्
रज्जूपरिमृदं लिप्य ततोपि रज्जुवेष्टयेत् २३
तत्र रज्वन्तरं विप्र एकद्वित्र्यंगुलं भवेत्
ततो वै मृत्समालिप्य यावत् शोषणकं द्विज २४
तावत् निरीक्ष्य कर्तव्यं मृल्लेपं तु शनैश्शनैः
शूलबाह्यगतव्यासं चतुर्भगविभाजिते २५
एकांशावधिकं लिप्य अनुरूपमुदाहृतम्
द्व्यंशावशतमिश्रं स्यात् भागेन त्वनलावधि २६
तत्तद्देशमृदे नैव तत्तद्योग्यं समालिपेत्
शेषं कालेन संपूर्यं वेदं शेषं सवल्कलम् २७
शेषं कार्पासतन्त्वादियुक्तं कल्के तु कल्पयेत्
मृत्संस्कारमिदं ख्यातं कल्पसंस्कारमुच्यते २८

इति काश्यपशिल्पे मृत्संस्कारलक्षणं नाम
षडशीतितमः पटलः समाप्तः

अथ सप्ताशीतितमः पटलः

## कल्कसंस्कारविधिः

अथ कल्कविधानं तु वक्ष्ये संक्षेपतः क्रमात्
नद्यां वापि तटाके वा दीर्घकायामथापि वा १
सस्यक्षेत्रेथवा विप्र प्राणिरूपे जले भवेत्
सुदृढा शुद्धजलजा स्थूलवालुकमुद्रिता २
संग्राह्या शर्करा ह्येषा तस्याः प्रक्षाळनं कुरु
शर्कराशोषणं कृत्वा सूक्ष्मचूर्णं तु तत्कुरु ३
त्रिफलोदेन संमिश्रय पिण्डं कृत्वा तु शोषयेत्
कपित्थनिर्यासजलं त्रिविधं प्रोच्यते द्विज ४
निर्यासस्य पञ्चगुणं सार्धपञ्चाथ षड्गुणम्
स्रुवं स्वच्छं च सेकं च त्रिविधं च क्रमोदितम् ५
स्वच्छसेकजलैः पिण्डं पेषयेन्नवनीतवत्
कार्पासतूलकैश्चापि मृदं संमिश्रय पेषयेत् ६
कल्कं भिन्नं तु यत्तत्तु कदळी भिन्नदण्डवत्
एतत्कल्कं समालिप्य प्रथमं कल्कमीरितम् ७
निर्यासत्रिगुणं सार्धत्रिगुणं च चतुर्गुणम्
मध्यबन्धजलं ह्येवं त्रिविधं परिपठ्यते ८
तेष्वन्तिमजलाभ्यां तु मर्दयेत्तु पुनः पुनः
क्रमेण लेपयेत्कल्कं द्वियवं त्रियवं घनम् ९
शनैस्तु लेपयेत्कल्कं भिन्नच्छिद्रविवर्जितम्
द्विमासं सार्धमासं वा मासं वा शोषयेत्ततः १०
कूर्चं न्यस्त्वा ततो विप्र पेषयेदण्डजैः क्रमात्
ततः स्वच्छजलैः कल्कं प्रमाणान्तं तु लेपयेत् ११
बहुकृत्वा प्रमाणं तु शोध्यमानं समं नयेत्
अंगोपांगं च प्रत्यंगं कल्पयेत् लक्षणान्वितम् १२

महांगमंगं चोपांगं प्रत्यंगं च चतुर्विधम्
महांगं तु शिरः प्रोक्तं गळं च हृदयोदरम् १३
मेढ्रं चांगमिति प्रोक्तं पादं करमुपांगकम्
प्रत्यंगं भूषणं प्रोक्तं षडंगं कल्पयेत्क्रमात् १४
कपित्थस्य तु निर्यासात्सार्धद्वित्रिगुणांभसा
पटाच्छादं तु कर्तव्यं कल्कमालेपयेत्ततः १५
कल्कालेपं यवाष्टांशं दशाहानन्तरं ततः
निर्यासतोयं कूर्चेन सम्यगालक्ष्य लेपयेत् १६
मण्डनानि तदूर्ध्वं तु मण्डयेत् लक्षणान्वितम्
पश्चात्कल्कं समालिप्य श्वेतं वर्णं प्रलेपयेत् १७
इत्येवं कल्कसंस्कारः संप्रोक्तः सकलस्य तु १८

इति काश्यपशिल्पे कल्कसंस्कारविधिर्नाम
सप्ताशीतितमः पटलः समाप्तः

## अथाष्टाशीतितमः पटलः
## वर्णसंस्कारलक्षणम्

अथ वक्ष्ये विशेषेण वर्णसंस्कारलक्षणम्
शिवात्परमसद्भावात् अव्यक्तं शान्तिसंभवम् १
शिवात् शक्तिः समुत्पन्ना तस्यानादस्समुत्थितः
तस्माद्व्योमसमुत्पन्नं तस्मादनिलसंभवः २
अनिलादग्निसंभूतिः तस्माद्वै जलसंभवः
तस्मात्तु पृथिवी जाता भूतेभ्यो वर्णसंभवः ३
श्वेतं रक्तं तथा पीतं कृष्णं चेति चतुर्विधम्
जले श्वेतं समुत्पन्नमग्नौ रक्तं समुद्भवम् ४
भुवि पीतं समुत्पन्नं वायौ कृष्णं समुत्थितम्

विष्णुर्महेश्वरो गौरी रुद्रो वर्णाधिपाः क्रमात् ५
विप्र क्षत्रियविट् शूद्राः सितवर्णादयः क्रमात्
श्वेतं रक्तं च पीतं च कृष्णं चैव चतुर्विधम् ६
श्वेतं शुक्लं च धवळमवदातं चतुर्विधम्
मुक्ताभं चन्दुवर्णाभं श्वेतवर्णं द्विधामतम् ७
शंखवर्णसमं शुक्लं वर्णमित्युदितं बुधैः
रजताभं च गोक्षीरसदृशं धवळं भवेत् ८
तारकासदृशं वर्णमवदातमुदाहृतम्
अरुणं रक्तं शोणं च पाटलं च चतुर्विधम् ९
करुणं शशरक्ताभं जपापुष्पाभं रक्तकम्
शोणं किंशुकपुष्पाभं लाक्षासारं तु पाटलम् १०
स्वर्णं पिशंगं पीतं च हरितं च चतुर्विधम्
स्वर्णवर्णवपुं पुण्ड्रं पिसंगजनिसारवित् ११
हरितालं च पीतस्य हरितं रज्जुमंत्रवत्
नीलं श्यामं च कालं च कृष्णं चैव चतुर्विधम् १२
मेघवर्णसमं नीलं श्यामं वै वनवायसम्
शिखिवर्णनिभं कालं कृष्णं भ्रमरपत्रवत् १३
एवं षोडशभेदेन वर्णानि स्युः स्वतंत्रतः
धरणी जसमुच्छिष्टं रक्तं त्रासाग्रसंभवम् १४
अथवा जातिलिंगाभं रक्ताभासं द्विधा मतम्
गोदावर्यां तु संभूतं हरितालमुदाहृतम् १५
अतसी पुष्पसंकाशं राजावर्ताश्चमुच्यते
श्यामपाषाणसारं तु श्याममित्यभिधीयते १६
दीपोद्भूतरजो वर्णं कृष्णवर्णमुदाहृतम्
एवमादिकलावर्णाः तस्मिन् तस्मिन्ननेकधा १७

श्वेतं च लाक्षासारं च द्वीपोद्भवरजस्तथा
पद्माभं चैव नीलाभं धातुरित्यभिधीयते
एवं स्वतः प्रधानं तु वर्णं बिंबार्हकं मतम् १८
इति काश्यपशिल्पे वर्णलक्षणं नाम अष्टाशीतितमः पटलः समाप्तः

## अथैकोननवतितमः पटलः

## वर्णसंस्कारलक्षणम्

सुधाकर्मार्हकं वर्णं वक्ष्येहं द्विजसत्तम
पीताभमश्मपीतं स्यात्तादृशं चूर्णवत्कृतम् १
नारिकेळोदकैर्मिश्रं दाहे रक्तनिभं भवेत्
तत्सुधाकर्मरक्तं स्यात् शंखं दग्धं सितं भवेत् २
राजावर्तं च श्यामं च पाषाणौ द्वौ च पूजितौ
इतराभा न शस्ताः स्युः सुधाकर्मसु सुव्रत ३
अथ संस्कारवर्णास्तु वक्ष्येहं द्विजसत्तम
सितं रक्तं समं मिश्रं गौरवर्णमुदाहृतम् ४
सितं पीतं समं मिश्रं यत्तत्कर्बुरकं भवेत्
सितं कृष्णं समं मिश्रं धूम्रवर्णमुदाहृतम् ५
श्वेतं कृष्णं च पीतं च समभागं तु मिश्रितम्
सारश्छविरिदं ख्यातं वर्णकर्मसुचोदितम् ६
श्वेतं रक्तं च पीतं च मिश्रकं समुदाहृतम्
रक्तं पीतं च कृष्णं च समभागं तु मिश्रितम् ७
-------
रक्तं पीतं समं मिश्रं वकुळस्य फलाकृतिः ८
ज्वलनच्छविराख्यातमग्निवर्णमिदं परम्
पीतस्य द्विगुणं रक्तं मिश्रं तत्त्वतिरक्तकम् ९

उभयोः समयोगेन वर्णमेवमुदीरितम्
रक्तस्य द्विगुणं विषमिश्रितं गुलवर्णकम् १०
पीतस्य च तदर्धं तु मिश्रितं कपिलं भवेत्
सितवेदांशरक्ताढ्यं खर्परस्य समं भवेत् ११
तदेवा निलमाधिक्य धान्यांकुरमुदाहृतम्
श्यामार्धं हरितालं च कुंकुमं हरितार्धकम् १२
मिश्रितं स्यात्सस्यमस्याः कृष्णं लाद्मं च संमितम्
जंबूफलसमं त्वेतत् वर्णमित्युच्यतेऽथवा १३
जातीफलसमं लाद्मासारं लोहितमुच्यते
कृष्णं नीलं समं मिश्रं केशवर्णमुदाहृतम् १४
सस्य श्यामं च रक्तं च मिश्रं माञ्जिष्ठवर्णकम्
कृष्णं पीतं समं मिश्रं मधुवर्णमुदाहृतम् १५
कृष्णस्य द्विगुणं पीतं मानुषं वर्णमुच्यते
मानुषं रक्तमधिकं हरितं समुदाहृतं १६
निहोपेतदात्रवण--- मुदाहृतम्
तेषु यन्नस्यमल्पेन बहुमानं समन्वितम् १७
बाहुसामेति तत्ख्यातं द्रव्याल्पेन समन्वितम्
अल्पसारमिदं ख्यातं सलेपा कल्पितं विदुः १८
वर्णानामानुकूलस्य सममेव समाश्रितम्
कृष्णस्य द्विगुणं रक्तं मिश्रितं तु कषायकम् १९
श्वेतस्य द्विगुणं श्वेतं मिश्रितं पिंगळं भवेत्
श्वेतस्य त्रिगुणं पीतं मिश्रं कह्लारसन्निभम् २०
कृष्णस्य द्विगुणं पीतं मिश्रितं चांबुसन्निभम्
तदेव नृणां वर्णं स्यात्कृष्णं पीतसमं तु वा २१
हरिताळं समं कृष्णं शुकपद्मसमं भवेत्

तदेव पीतमधिकं धान्यांकुरसमं भवेत्  २२
श्यामार्धं हरितालं च कुंकुमं च तदर्धकम्
मिश्रितं सस्य श्यामं स्यात्कृष्णं लाक्षासमन्वितम्  २३
जंबूफलसमानं तु वर्णमित्युच्यते मुहुः
शाली लिंगसमं लाक्षासारं लोहितमुच्यते  २४
लोहितं रक्तमधिकं वर्णं रूक्षं हरीतकम्
कृष्णं नीलं समं मिश्रं केशवर्णमुदाहृतम्  २५
सस्य श्यामं मन्दरक्तं मिश्रं माञ्जिष्ठवर्णकम्
कृष्णं रक्तं समं वर्णं मधुवर्णमुदाहृतम्  २६
तदेव रक्तमाधिक्य मानुषं वर्णमुच्यते
स्याद्रक्तमधिकं वर्णं रूक्षं वर्णं हरीतकम्  २७
तस्माच्छामनिभोपेतं सूत्रवर्णमुदाहृतम्
वर्णानामानुकूल्यं तु सारमेवं समश्रितम्  २८
श्वेतं रक्तं च पीतं च समं सारमुदीरितम्
श्वेतं कृष्णं च पीतं च समं मिश्रं तु मिश्रकम्  २९
कृष्णात्तु द्विगुणं रक्तं मिश्रितं तु कषायकम्
कृष्णास्य द्विगुणं पीतं मिश्रितं नीरसन्निभम्  ३०
कृष्णं पीतं समं मिश्रं तृणवर्णमुदीरितम्
हरितालं च श्यामं च समांशं शुकपक्षवत्  ३१
ताळाधिकं तदेव स्यात् धान्यां कुरसमप्रभम्
कृष्णं रक्तं समं मिश्रं मधुवर्णमुदीरितम्  ३२
सस्य श्यामं च रक्तं च समं माञ्जिष्ठवर्णकम्
तदेव रक्तमधिकं मानुषं वर्णमीरितम्  ३३
मानुषं रक्तमधिकं रूक्षवर्णमुदाहृतम्
तस्मात् श्यामनिभोपेतं नात्रवर्णमुदीरितम्  ३४

बहुद्रव्यसमायुक्तं बहुसारमुदीरितम्
अल्पद्रव्यसमायुक्तमल्पसारमुदाहृतम्
सारं वर्णानुकूलं तु मिश्रयेत् वर्णवित्तमः ३५
इति काश्यपशिल्पे वर्णसंस्कारलक्षणं नाम
एकोननवतितमः पटलः समाप्तः

अथ नवतितमः पटलः
वर्णलेपनविधिः
अथ वक्ष्ये विशेषेण वर्णलेपनमुत्तमम्
शैलेष्टकदारुगर्भं त्रिविधं वर्णलेपनम् १
शैलजे वर्णलेपार्थे महांगादिशिलामयम्
उपरिष्टात्पटमाच्छाद्य तस्योर्ध्वं शर्करां लिपेत् २
तदूर्ध्वं चिक्कणं लिप्य श्वेतवर्णादयस्ततः
बिंबोचितं प्रलिप्याथ प्रतिष्ठां सम्यगाचरेत् ३
अथवाशैलजे बिंबे पटाच्छादं विनोर्ध्वतः
शर्करां यवमानं तु लिप्यचिक्कणलेपनम् ४
श्वेतं च बिंबवर्णं च क्रमेणैवोपलेपयेत्
शिलागर्भमिदं ख्यातं वर्णभिन्नाश्मभेदतः ५
शूलस्थापनकर्मादि दारुगर्भं तु पूर्ववत्
चित्रं वाप्यर्धचित्रं वा पार्श्वेष्टकसुधान्वितम् ६
अंगसंपूरणं कृत्वा पटमाच्छादयेत्ततः
शर्करादीनि सर्वाणि शैलजे तु यथा तथा ७
कर्तव्यमिष्टकागर्भं तद्दारुमिश्रकं तु वा
एवं त्रिविधनित्यं तु वर्णगर्भमुदाहृतम् ८
आदौ श्वेतनिभं लिप्य सर्वस्य स्वसमैः जलैः

क्रमेण श्वेतवर्णं तु त्रिभक्त्या वा तु लेपयेत्  ९
तदूर्ध्वं पाण्डुरं वर्णं लेपयेत् द्विजसत्तम
सितबिंबनिभं चैव समं मिश्रं तु पाण्डुरम्  १०
सितवर्णं तु बिंबानां मधुवर्णनिभं भवेत्
रक्तफेननिभं यत्तत्पाण्डुवर्णं प्रकल्पितम्  ११
बन्धं स्वच्छं च मध्यं च मेदुरं च त्रिधा भवेत्
कपित्थनिर्यासेनैव त्रिसन्ध्यं तु प्रकल्पयेत्  १२
स्वच्छं तैलोपमं ख्यातं मध्यमं मधुसादृशम्
तरुणं दधिसादृश्यं स्निग्धं द्रोणदरं भवेत्  १३
मेदुरेण भवेच्छिष्टं त्वेवं सन्धानमाचरेत्
कल्कमर्दनकार्यं तु कारयेन्मध्यवारिणा  १४
कल्कं स्वच्छजलेनैव पेषणं तु समाचरेत्
सुधाकर्मजलोपेते महापेमेषचर्मयोः  १५
पर्यासारं तु बद्धं स्यात् जलपाद्यर्हका भवेत्
जलपत्तिविना यत्र कापित्थजं द्विज  १६
निर्यासजलसंबन्धमुक्तमन्यन्न कारयेत्
कल्कं षोडशधाभज्य षट्पञ्चचतुरं तु वा  १७
कपित्थनिर्यासेनैव स्वच्छं नैव जलं भवेत्
सकृत् चिक्कणलेपं तु कारयेत् द्विजसत्तम  १८
चिक्कणं कल्कसारं च द्विविधं चिक्कणं भवेत्
जलपात्रं सुधाकुंभे चिक्कणं शर्करद्रवम्  १९
चिक्कणं द्विविधं चैव कल्पयेत्तु यथोचितम्
चिक्कणं कल्पबन्धं तु दशभागविभाजिते  २०
एकांशरहितं बन्धं शिलालेपनयोग्यकम्
चिक्कणे बन्धतुल्यं वा सितलेपनकर्मणि  २१

सितबन्धसमं वाथ तद्विंशांशविहीनकम्
एवं वर्णस्य बन्धस्य त्रिः कृत्वः पाण्डुलेपनम् २२
षड्वर्णं तु ततो लेप्यं यथा क्रमेण देशिक
बिंबसर्वतवर्णं तु षट्कृत्वः संलिपेत्तथा २३
पाण्डुवर्णं तु विंशांशे त्वंशहीनं तु वर्जयेत्
षट्पदादिकवर्णस्य बन्धमित्युच्यते मया २४
तदार्णीं वर्णबन्धं तु विंशांशेंशविहीनकम्
द्वितीयं वर्णबन्धं स्यात्तन्वतत् बन्धनं ततः २५
षण्णामपिसवर्णाद्या बंधमेवं क्रमोन्नतम्
प्रथमेत्युच्यते बंधे षड्विधं च लिपेत्क्रमात् २६
पत्रं च रहितं बिन्दुं धूपमुद्वर्तनं तथा
प्रवर्तनं षडेतानि वर्णलेपक्रमं विदुः २७
दीर्घपत्रमिति ख्यातं ततोन्यच्च द्विभाजितम्
सर्षपास्तरणं यद्वत्तदिदं बिन्दुरुच्यते २८
सूक्ष्मबिन्दुस्तु धूपं स्यात्तस्माद्वै सूक्ष्मबिन्दुवत्
उद्वर्तनं समाख्यातं ततस्सूक्ष्मं प्रवर्तनम् २९
स्वर्णचूर्णसमायुक्तं वर्णलेपप्रवर्तकं
षड्वर्णक्रममेवं हि लेपयेत्तु परस्परं ३०
इति काश्यपशिल्पे वर्णलेपनविधिर्नाम नवतितमः पटलः समाप्तः

## अथैकनवतितमः पटलः

### भक्तलक्षणम्

अथ वक्ष्ये विशेषेण भक्तानां लक्षणं परम्
सर्वेषामपि भक्तानां पदं चतुर्विधं भवेत् १
सालोक्यं चैव सामीप्यं सायुज्यं च तथैव च

सारूप्यं च पदं विप्र चतुर्भेदमुदाहृतम् २
पुमांसो वा स्त्रियो वाथ तेषु यत्पादमाश्रितम्
तत्तत्पादानुकूल्यं वा सालोक्यपदमाश्रितम् ३
सजाति चिह्नसंयुक्ताः सालोक्यपदमाश्रिताः
तदंशसंयुतास्त्वन्ये शेषास्तत्पदमाश्रिताः ४
बालायुवानो वृद्धाश्च त्रिविधास्ते प्रकीर्तिताः
त्रिवर्षादिकलाब्दान्तं वयसा बालसंज्ञिताः ५
ततस्सप्ततिवर्षान्तं वयसा यौवनामताः
तदूर्ध्ववयसोपेताः वृद्धास्तु परिकीर्तिताः ६
बालानां पञ्चतालः स्याशेषाणां वसुतालकम्
स्थानकं चासनं चैव यानं नृत्तं तथैव च ७
एवं चतुःप्रकारेण कर्तव्यं मानुषात्मकम्
आभंगं समभंगं वा स्थानकं तु समाचरेत् ८
सव्यं वामस्य पादं तु कुञ्चितं त्वितरत्स्थितं
हस्तौ जान्वञ्चितौ कृत्वा हृदयेञ्जलिकं त्वथ ९
लंब्यं दक्षिणपादं तु हस्तं पूर्ववदेव हि
स्वजातिचिह्नसंयुक्तं पञ्चमुद्रासमन्वितम् १०
हृदयाञ्जलिसंयुक्तं कटकं वरदं त्वथ
स्थानकं ह्येवमाख्यातमासनं शृणु सुव्रत ११
पद्मे वा भद्रपीठे वा वामपादं तु सुस्थितं
दक्षपादं कुञ्चितं च हस्तं पूर्ववदेव हि १२
आसनं ह्येवमाख्यातं ततो यानं वदाम्यहम्
टङ्कं दक्षिणहस्ते तु पाशं वामकरे धृतम् १३
अथवा दक्षिणे चापं धनुश्च वामहस्तके
गमनोत्सुकवत्कल्प्यं यानमूर्तिः द्विजोत्तम १४

नृत्तं त्रिविधमुद्दिष्टं सात्विकं राजसं तथा
तामसं चेतिविख्यातं क्रमात् बालान्तरान्तकम्  १५
वयसोपेतभक्तानां योग्यमित्युदितं मतम्
तेष्वादौ सात्विकं नृत्तं वक्ष्येहं शृणु सुव्रत  १६
भक्तानामुदयं चापि कल्प्यं मानोक्तवत् भवेत्
कल्प्यमष्टांगुलं पादनतमानं विधीयते  १७
स्थानकं वामपादं तु पदपीते तु सुस्थितम्
उद्धृतं दक्षिणं पादं पीठाद्वे वेदमात्रकम्  १८
पञ्चषट्सप्तमात्रं वा उद्धृतांघ्रेस्तु मानकम्
तत्समं ब्रह्मसूत्रात्तु तदर्धांगुष्ठानकम्  १९
ललाटमध्यान्नासाग्रे हिक्कामध्ये तथैव च
स्थितांघ्रिनळकामध्ये ब्रह्मसूत्रं प्रलंबयेत्  २०
तत्सूत्रात् वामतो नाभिमध्यं सार्धांगुलं भवेत्
सूत्रात्स्थितांघ्रिजान्वन्तं --- --- ---  २१
ललाटात् गुल्फान्तसूत्रान्तरमक्षसूत्रां लंबयेत्
नासाग्रमुदरं मध्यं तत्सूत्रं संस्पृशेदपि  २२
अथवा दक्षिणं पादं पीठस्थितां नवक्रमम्
उन्नतं वामपादं तु शेषं तदनुकारितम्  २३
सर्वाभरणसंयुक्तं जालं चेन्नग्नमेव वा
नानामालासमायुक्तं नानावस्त्रविभूषितम्  २४
सात्विकं नृत्तमाख्यातं राजसं शृणु सुव्रत
शुचिर्विना तदस्तात्ते वक्रपिण्डं तु वाञ्जलिः  २५
दशनन्दाष्टमात्रं वा पीठाद्वातो क्रमात् भवेत्
शेषं प्रागिव कर्तव्यमेवं राजसमेव हि  २६
दण्डहस्तं विना वापि हस्तं वा --- स्पृशेत्

दराडदक्षिणहस्ते तु दृक् पतीन्नताननम् २७
एकं द्वित्रिपादं वा मात्रं वामे दृत्य संभवम्
भस्मोद्धूळितसर्वांगमक्षमाल्यैरलंकृतम् २८
तामसं ह्येवमाख्यातमेवं स्यात् भक्तलक्षणम्
प्रणवाद्यं नमोन्तं च स्वनाम पदमध्यमम् २९
भक्तानां मंत्रमाख्यातं तेनैवार्चनमारभेत् ३०
इति काश्यपशिल्पे भक्तलक्षणं नाम एकनवतितमः पटलः समाप्तः

## अथ द्विनवतितमः पटलः
## चरिडकेशलक्षणम्

अथ वक्ष्ये विशेषेण चराडेशलक्षणं परम्
शूद्रस्यैव तु रूक्षांशः चरिडकेश इति स्मृतः १
प्रथमावरणे चैव स्थानं कौबेरके भवेत्
अधमं दशतालं तु मानं चराडेशमुच्यते २
तदादि चराडमूर्तिस्तु युगं प्रतिविशेषतः
चिह्नान्वनामधा उह्य नामभेदं च भेदतः ३
कृते युगे प्रचराडाख्यः श्वेतवर्णसमायुतः
दोर्भिः षोदशभिर्युक्तः वाहनं तु गजो भवेत् ४
शूलः च परशुः वज्रः खड्गः कोशः तथैव च
क्षुरिका चाभयं दराडः दक्षिणाष्टायुधं भवेत् ५
खेटकं भिरिडपालं च पाशं खराडं तथैव च
वरदं व्याघ्रहस्तं च सूचिं नाहं च वामके ६
जटामकुटसंयुक्तं रुद्राक्षाभरणान्वितम्
त्रेतायामष्टहस्तस्तु अतिरक्तसमप्रभम् ७
--- --- --- --- नाम्ना तु सुविकीर्णजटान्वितम्

वाहनं तु हयं विद्यात्किञ्चित्प्रहसिताननम् ८
शूलं पाशं च खड्गं च परशुं दक्षिणे करे
वरदं खेटकं पाशं घराटां वा गुडकं धृतम् ९
द्वापरे तु चतुर्थाभिः पादसिंहासनम्
जटामराडलसंयुक्तं सदायज्ञे --- --- --- १०
दंष्ट्रारौद्रवदनं टंकं शूलं च लक्षणे
पाशं चाप्यंकुशं वामे भद्रपीठोपरिस्थितः ११
कलौ तु द्विभुजांशांशं जटामकुटमरिडतम्
जटामकुटसंयुक्तं केशबन्धमथापि वा १२
कृष्णाभं पादरक्ताभं सौम्यनेत्राननान्वितम्
आभंगमनुभंगं वा संपादस्थानकं तु वा १३
भंगं चेद्दक्षिणं पादं कुञ्चितं चतुरंगुलम्
अथवा दक्षिणं पादं सुस्थितं वाथ कुंचितम् १४
ख्यातं चराडेशनाम्ना तु स्थानकं वासनं तु वा
आसनं चेत्तु वामांघ्रिं शाययेदस्य लंबयेत् १५
टंकहीनन्तु वापुष्पमालयाञ्जलिवाधृतः
ईशदक्षिणपार्श्वे तु प्रभीताननमेव हि १६
पादावासं वा वृषभं स्यात् श्वेतपत्रवर्णयुक्
एवं चतुर्विधं चापि चराडेशमभिधीयते १७
कन्यसं दशतालेन सर्वांगं परिकल्पयेत्
चराडेशलक्षणं प्रोक्तं भूमिमानमथ शृणु १८

इति काश्यपशिल्पे चरिडकेशलक्षणं नाम
द्विनवतितमः पटलः समाप्तः
इति काश्यपशिल्पे लिङ्गबेरलक्षणं नाम द्वितीयो भागस्समाप्तः

